| Page | Line | Correct reading | Incorrect reading |
|---|---|---|---|
| 77 | 6 | सर्वं- | सर्वे- |
| 77 | 13 | *देहान्तरा- | देहान्तारा- |
| 80 | 1 | श्रेयस्कराणि | श्रेयस्काराणि |
| 83 | 2 | विधेयम् | विधेथम् |
| 89 | 13 | -पराङ्मुखा- | -परामुखा- |
| 90 | 7 | *जीवितुं | जीवयीत (?) |
| 91 | 12 | तृष्णा | तृष्णा |
| 94 | 12 | *अन्तर्लक्ष्य- | अन्तर्लक्ष्यम्, |
| 94 | 12–13 | (The passage अन्तर्लक्ष्य to गोपिता is obviously a stanza and as such should be read as follows :— अन्तर्लक्ष्यबहिर्दृष्टिर्निमेषोन्मेषवर्जिता । एषा सा शाम्भवी मुद्रा वेदशास्त्रेषु गोपिता ॥ | |
| 95 | 16 | वासना | वासना |

# उपेन्द्रविज्ञानसूत्रस्य विषयानुक्रमणिका

—:o:—

## १—उत्तमाधिकारिप्रकरणम्

## २—मध्यमाधिकारिप्रकरणम्

## ३—कनिष्ठाधिकारिप्रकरणम्

---

## ४—उत्तमाद्यधिकारिसाधारणोपदेशप्रकरणम्



---



श्रीमान् पण्डितोऽनन्तराममिश्रः

विश्वेशपुण्यपुञ्जाभ्यां सिद्धाः सर्वे मनोरथाः ।
तथैव काश्यां चरमोऽनन्तरामाद् गुरोर्मम ॥

( स्वामिभास्करानन्दः )

ओ३म्

अथ स्वोपज्ञभाष्यसहितम्

# उपेन्द्रविज्ञानसूत्रम्

सर्वेऽपि संसारिणः सुखमेव कामयमानाः तत्साधने मोमुह्यमानाः सुखार्थमेव दुःखसाधनं सम्पादयन्तः सुखानुपलब्ध्या पश्चात्तपन्तो भ्रान्तकल्पनयाऽन्यथाभावितेषु दैवादिष्वात्मदोषमाकलयन्तः पुनःपुनरुत्पद्यमाना: पञ्चत्वमापद्यन्ते। ब्रह्म जिज्ञासवो ब्रह्ममीमांसायां, धर्मं धर्ममीमांसायां, न्याये तु प्रमाणानि, पदार्थान् वैशेषिके, प्रकृतिपुरुषौ साङ्ख्ये, योगं योगे, व्यासादिभिः प्रवर्त्यन्ते। न कैरपि दयावशंवदैः संसारसागरभयानकावर्तसन्तापसन्तप्तहृदयानां सुखमेव पर्यालोचमानानां पुरस्तादिदं सुखमिदं तत्साधनमिति निरूपितम्।

सुकृतजनितलोकानां नित्यतां, पशुहिंसादेरावश्यकतां च, सर्वस्यापि दृश्यस्य रज्जुसर्पस्येव मिथ्यात्वं, वेदानामीश्वरकर्तृकत्वं, जगतः परमाणुकारणकत्वमित्यादिषु तत्र तत्र प्रासङ्गिकेषु विषयेषु परस्परं विरोधमाकलयन्तः, प्रासङ्गिकमिति परस्परविरोधकलङ्कमविगणय्य श्रद्दधाना अपि सुखार्थिनः, प्रासङ्गिकमित्येव सुखनिरूपणमुपेक्ष्यायासविकलास्ततस्ततः पराङ्मुखा भवन्तो न सुखं प्राप्नुवन्ति। एकोऽपि नेदृशो मार्ग उपदिष्टो येन

गच्छन् भ्रान्तपदवीं न प्रपद्येत । एकमपि न तादृशं मतं यन्न परमतैराक्रम्यते । नैकोऽपि तादृश उपदेशो यो न कपटलेशेनापि लाञ्छ्यते । कः खलु तादृशः पण्डितो यो न(?) परमतमात्ममतमीक्षते । के वा तादृशमुपदिशन्ति यादृशं सुविजानते । के परिचिन्वन्ति पुण्यपापे । विरला हि महान्तः प्राणाधिकं प्रियं सत्यमीक्षन्ते ।

एवं परेष्वनुकम्पितहृदयः प्रशान्तं दान्तमुपरतं तितिक्षुं श्रीमदनन्तराममिश्रमाचार्यवर्यं प्रपन्न उपेन्द्र आत्मविज्ञानमेव सूत्रयति—

## अथ सुखदुःखतत्साधनानि ॥ १ ॥

अथेति असत्यतत्पक्षीयेष्वनुकूलभावनोन्मूलनानन्तरम् । यावन्तो हि विषया महर्षीणां परस्परविरुद्धभाषयोपनिबद्धाः स्वानुभवपदवीमनारूढा व्यामोहमनाप्ततां वा निरूपयन्ति, यावन्तश्च विषयाः क्वचित्सुखसाधनत्वेन क्वचिद् दुःखसाधनत्वेन च निरूपितास्तेषु ये दुःखसाधनत्वेनैव स्वानुभवमारोहन्ति, तादृशाः सर्वेऽप्यसत्यपक्षीयाः । सुखं दुःखं तयोः साधने चोपदिश्यन्ते ॥ १ ॥

ननु यत्प्रियं तत्सुखमिति सुप्रसिद्धम् । तथा च प्रियाः सर्वेऽपि देहदारसुतादय उपभुज्यमानाः शब्दादयो विषयाश्च सुखमिति लौकिकं, तथा यस्मै सर्वाणि यन्न कस्मैचिदिति शास्त्रीयं लक्षणमुपेक्ष्य कुतो लक्षणान्तरमुच्यते । प्रियत्वं प्रीतिविषयतेति प्रथमं सुखसाधने, द्वितीयमात्मन्यतिप्रसक्त्याऽतिव्याप्तं, तथाऽऽत्मनः सुखमात्मा वा सुखमिति विवादो दुर्निवार इत्यादिपर्यालोचनात् । अतो

निखिललक्षणानुरूपं लक्षयति—

आत्मनो निर्विषया स्थितिः सुखम् ॥ २ ॥

आत्मन इति । श्रोत्रेण वीणादिशब्दोपलब्ध्या, त्वचा रामादिमृदुतमस्पर्शालिङ्गनेन, चक्षुषा सरसरूपालोकनेन, रसनेन नूतनद्राक्षादिरसास्वादनेन, घ्राणेन पाटीरपरिमलादिगन्धावाप्त्याऽऽत्मा प्रसीदति । एष प्रसादः सन्तोष एव भवितुमर्हति, आहोस्विदेष विषयानन्दः निखिलविषयस्पृहाप्रतिबन्धोपलक्षितलक्षणावस्था वा । इत्यादिनाऽऽत्मनो निर्विषया स्थिरिरेव निरूप्यते ॥ २ ॥

न केवलं शब्दादयो हि पञ्च विषया उच्यन्ते, अपि तु यदभिमुखो भवत्यात्मा ते सर्वेऽप्यात्मादयः । तथा च निर्विषयस्थितेरात्मनो जडत्वाभिव्यञ्जकतया जडत्वदशायां सुखनिरूपणं दुःशकमिति लक्षणान्तरं सूत्रयति—

स्वाभिमुखं वा स्फुरणम् ॥ ३ ॥

स्वाभिमुखमिति । स्वमात्मानमभि मुखं सारूप्यं प्रतिबिम्बग्राहिता वा यस्य तत् स्फुरणम् । वह्नेरिन्धनानुरूपा ज्वालेवात्मनो विषयानुरूपं चैतन्यम् । शब्दादिबाह्यविषयपराङ्मुखतयाऽन्ताङ्मुखत्वेन विषयान्तरानुपलब्ध्या वह्निज्वालयोरिवाभेदेन चेतनचैतन्ययोरभेदाध्यवसायेन स्वाभिमुखं स्फुरणं वा सुखम्, चैतन्यस्य सविषयकत्वावश्यम्भावात् ॥ ३ ॥

यदभिमुखो भवत्यात्मा स एव विषयश्चैतन्यमाकर्षन्प्रतिबि-

म्भवति, नहि निखिलविषयपराङ्मुखस्यात्मनश्चैतन्यमाविर्भवति, निरिन्धनस्य वह्नेरिव ज्वालेति शङ्कमानं प्रति लक्षणान्तरमुपदिशति—

## स्वसमानाकारं वा ॥४॥

स्वसमानेति । स्वेनात्मना समानस्तुल्य आकारः स्वरूपं यस्य तत् । यं हि विषयं प्राप्य सन्तुष्यंस्ततोऽन्यं न यावदभिलष्यति तावदात्मन्येव शाम्यति । न(?) सुखमनुभवन्नात्मा स्वसमानाकारं स्फुरतीति स्वसमानाकारं स्फुरणं वा सुखम् ॥ ४ ॥

चैतन्यस्य सविषयकत्वावश्यम्भावेन निर्विषयं स्फुरणं न सम्भाव्यते, अलम्बुद्ध्या सर्वतः पराङ्मुखस्यात्माऽपि विषयो न सम्भवतीति प्रकारान्तरेण लक्षयति—

## इतरानभिमुखता वा ॥ ५ ॥

इतरेति । स्वेतरस्मिन्विषये योऽभिमुखताविरह आत्मनस्तद्वा सुखम् । यदा केऽपि विषया नात्मानमभिमुखयन्ति, स्वभावतो हि संस्काररहितं स्फुरति, तदैव सुखमनुभवतीति स्वेतरसकलाभिमुखताराहित्यं वा सुखम् ॥ ५ ॥

## इच्छादिपारतन्त्र्यराहित्यं वा ॥ ६ ॥

इच्छादीति । आदिनेच्छापरिणामविशेषा रागद्वेषादयो गृह्यन्ते । तत्पारतन्त्र्यन्तु तदनुरूपवर्तनम् । तस्य राहित्यमभावो वा सुखम् ॥ ६ ॥

नहि कोऽपि स्वतन्त्रः पुरुषः स्वेच्छामतिक्रम्य चेष्टते, नापि परतन्त्रः परेच्छामित्युभयथाऽपीच्छानुरूपमेव वर्त्तनमुपलभ्यते । नापीदृशः कोऽपि विश्रूयते यदिच्छति तदर्थं यो न यतते । प्रयतमानो हि कायिकं वाचिकं व्यापारमाश्रयते । अशक्यादेवेष्यमाणादुपरमति । मुह्यंस्तु तदर्थमपि यतते सन्तपति विश्रमति चानेकधेत्यत इच्छादिसत्त्वे तत्पारतन्त्र्यं दुर्वारमिति निखिललक्षणानुगतं लक्षणान्तरमनुशास्ति—

## इच्छाद्यनुद्भवो वा ॥ ७ ॥

इच्छाद्यनुद्भव इति । अभिलषितविषयं प्राप्य तेन यावत् समयं प्रसीदन्सन्तुष्यति, विषयान्तरं नावगाहते, तावत्समयमभिलषितविषयेच्छादिविनिवृत्तिभावीच्छाद्यनुद्भवाभ्यां विस्पष्टमनुभाव्यते सुखमितीच्छाद्यनुद्भवो वा सुखलक्षणम् । यद्यभिलषितं विषयं प्राप्यैव तूर्णं विषयान्तरं कामयेत तर्हि किं तेनाभिलाषेण साधितम् । न किमपीति चेदुच्यते । तर्हि निरर्थकत्वान्न पुनरभिलाष उपतिष्ठेत । मोपतिष्ठतामिति चेदुच्यते । तर्हि, अङ्ग !, अनुकूलबुद्धिः प्रतिबध्यताम् , अमृतमिव विषं पीयताम् ।

अथ स्वभावतो हि स्फुरन्नात्मा यं कञ्चन विषयीकरोति । तेषु यमनुकूलतया विषयीकरोति तेन संस्कृतस्तमभिलष्यति । ततः स्वशक्यं मत्वा तदर्थं प्रयतते । अनुकूलतया विषयीकरणञ्च—सुखमनेन मम भवेदित्येवंप्रकारेण विषयप्रतिविम्बग्रहणम् ।

अथेच्छाद्यनुद्भवदशायामात्मनो निर्विषया हि स्थितिः, विशे-

षेण सिनाति बध्नात्यात्मानमिति योगार्थविरहात् । स्वाभिमुखमेव स्फुरणमन्तर्मुखत्वात् । अभिलषितविषयविमुखमात्मभूतमेव स्फुरणं विषयान्तराण्यभिव्यञ्जयन्तीति स्वसमानाकारमेव स्फरणम् । अभिलषितविषयपराङ्मुखमन्तर्मुखं विशेषानवग्राहिचैतन्यं यावदात्मनि शाम्यति नास्ति तावदितराभिमुखता, इच्छादेरभावात्, कथं तत्पारतन्त्र्यमिति ॥ ७ ॥

किं तत्तदभिलषितविषयाः स्वनिष्ठं सुखमात्मने समर्पयन्त्यन्यतो वा कुतश्चित् । आद्ये, चिरविघटितव्याघ्री बालावलोकनेन, तं प्रति तन्मातेव, सोल्लासं स(?=सु)पण्डिताऽपि कुतो न प्रवर्त्तेत । द्वितीयेऽपि, विषयातिरिक्तो नास्ति किमन्यशब्दार्थ इति स एव व्याघातः । नायं व्याघात उभयत्रापि भवितुमर्हति, दृष्टान्ते वैषम्यात् । यदभिलषितो व्याघ्रिपुत्रः स तं प्रति प्रवर्त्तेत, नाना(?=नान)भिलपन् । महानयं व्यामोहोऽभिलाषेण विक्रियते विषयोऽन्यतां च प्रतिपद्यत इति । किमभिलाषेण विषयेषु सुखमुत्पाद्यत इत्युच्यते । यतोऽभिलषिता एव विषया आत्मानं प्रीणयन्तीति । नैतद्युक्तम् । अभिलाषनिवृत्त्यनन्तरमेव सुखोपलब्धेः । सुखोपलब्धावभिलाषनिवृत्तेः प्रयोजकत्वात् । कथन्तर्ह्यभिलषितविषयप्राप्त्यनन्तरं सुखमनुभवत्यात्मेति । किं तदानीं विषयतया सुखमवगाहत उत सुखात्मतया प्रकाशते । नाद्यः, विषयविषयिणोर्भेदानुपलब्धेः । अन्तरेण भेदं विषयीकरणानुपपत्तेः । किं द्वितीयो रज्जुसर्पवद् भ्रम आहोस्वित्प्रमा । भ्रमश्चेद्विज्ञानेन निवर्त्यताम् । प्रमा चेत्कुतो नाङ्गीक्रियते ।

यद्यात्मैव सुखं, कुतः क्षणिकत्वं तत्रोपलभ्यते । आहो-

स्विदहमाकारवत् कदाचित्सुखात्मनाऽप्यात्मनः स्फुरणम् । इद-मत्रावधेयम् । यथाऽन्तर्मुखं चैतन्यमहन्तावगाहि भवति तथैव सुखावगाहीति । तर्ह्यहम्भावस्येव कुतो न सुखस्य सार्वदिक-त्वम् । महानयं व्यामोहः । सुखस्यैव सार्वदिकत्वेनाहम्भावस्य कादा-चित्कत्वात् । तथा चाहम्भावस्य सार्वदिकत्ववत्सुखे क्षणिकत्वं भ्रमः । कथन्तर्ह्येष भ्रमो निवर्त्तेत येन नित्यं सुखमुपलभ्येतेति सुख-साधनत्वेन भ्रमनिवर्त्तनोपायमुपदिशति—

## तस्य साधनं विवेकः ॥ ८ ॥

तस्येति । प्रमादिनो हि साधनक्लेशमसहमानाः साधनसम्पादन-मुपेत्य साधयितुमशक्नुवन्तः परैः साधितमेवोपभुञ्जते, स्वातन्त्र्यस-मर्पणेन परतन्त्रा असमर्था इव सन्तपन्ति च । तथा विचित्रमिदं मया सङ्कल्पितम्, वस्तुतां प्रतिपद्यतां प्रियतमेयं मम प्रकृतिर्यया विक्रीडित-मिदं वस्तुतां प्रतिपत्स्यते, इत्येवमादरपुरस्सरं जगत्प्रवाहस्थिरीकरण-भावनया सच्चिदानन्दस्वरूपपराङ्मुखः संसारी भवन्नीश्वरतां जहावा-त्मा । ततोऽत्यन्तवहिर्मुखतया विस्मृत्य सच्चिदानन्दस्वरूपमात्मवि-म्बमाश्रयपरिच्छिन्नान् खण्डशः प्रतिविम्बभूतान संसारिणो जीवा-नेव विषयभूतान् स्वरूपत्वेन निश्चिनोति । जीवाश्च विम्बभूतसाक्षिपर-मात्मपराङ्मुखा विम्बविषयभूतं परिच्छिन्नं परस्परभिन्नं संसारिण-मेवात्मानं विजानन्तः संसरन्तीत्येवं प्रवर्द्धमानविपदसाधारण-कारणं न परिचिन्वन्ति ॥ ८ ॥

विशेषेण व्यक्तीभावेन विनक्ति पृथग्भवति, इतरभेदेन भा-

सते, इति विवेकेन कथं सुखमुत्पद्येत, अभिलषितविषयप्राप्त्यनन्तरं विवेकानभिव्यक्तेः । अथ तत्र यदि श्रमनिवर्तनद्वारा सुखसाधनत्वं निरूप्येत, व्यापारवदसाधारणकारणं साधनम् , व्यापारो श्रमनिवर्त्तनम् ; तर्हि श्रान्तानां न सुखमुत्पद्येत ; कथङ्कारं घटेत जीवनं तेषाम् । इत्यादिमसमञ्जसमवेत्य तं लक्षयति—

## स ततस्तत उपकारापकारसमीक्षणम् ॥ ६ ॥

स ततस्तत इति । प्रथमस्तच्छब्दः पूर्वोपस्थितपरामर्शकः, द्वितीयौ तत्कालोपस्थितपरामर्शकौ । तत्तदुपस्थितविषयेभ्यः प्राप्तयोरात्मन उपकारापकारयोः सम्यगीक्षणं संशयविपर्ययराहित्येन परिचयनं विवेकः । यावद्यत उपकारबुद्धिस्तावदेव तत्राभिलाषः । अभिलषितविषयप्राप्तेः परमभिलाषनिवृत्तावुपकारबुद्ध्या क्षणं प्रकृतिस्थतया संसारश्रमनिवर्त्तनेन सुखमनुभाव्यते । तथा द्विष्टविषयादुपतिष्ठमानादेव पराङ्मुखत्वेऽपकारान्मुक्त इति बुद्ध्या क्षणं प्रकृतिस्थया विक्षेपनिवर्तनेन स्वास्थ्यरूपं सुखमनुभाव्यते । तथा चाभिलषितविषयप्राप्तावभिलापनिवृत्तेरपकारिविषयोपस्थितौ द्वेषनिवृत्तेश्च परमयमुपकार इति मुक्तोऽपकारादित्युभयविधविवेकेन श्रमनिवृत्त्या सुखमनुभाव्यते ॥ ६ ॥

ये च तात्कालिकसुखेनात्मानं प्रीणयन्तोऽभिलषितविषयाः पश्चात्सन्तापयन्ति । तत्र दुःखसाधनतामवेत्य विवेकपराङ्मुखं प्रति तदेव लक्षणं विस्पष्टयति—

## आत्मानं किमुपकरोति किमपकरोतीति पर्यालोचनम् १०

आत्मानमिति । किमिति सामान्ये नपुंसकम् । तात्कालिकसुखेन१ तत्तदिन्द्रियं प्रीणयन्तोऽभिलषितविषया नात्मानमुपकुर्वन्ति । तथा तत्कालं प्रीणयन्तोऽपि बहवोऽभिलषितविषया इन्द्रियमपकुर्वन्ति । तथा चात्मानमुपकुर्वतामपकुर्वतां च पर्यालोचनमेव ततस्तत उपकारापकारसमीक्षणम् । एतेनात्मन्युपकारापकारसमीक्षणं विवेकः, न त्विन्द्रियेष्विति निर्गतम् ॥ १० ॥

अथ शब्दादयः सर्वेऽपि विषयाः प्रकृतिं विकुर्वन्त उपकारापकाराभ्यां न साक्षादात्मानं विकुर्वन्ति । किञ्चात्मानमपरिचिन्वतां विवेको नोदियात् । परिचितात्मानं प्रति तस्य वैयर्थ्यादुपदेशो वृथा स्यात् । ये चात्मानं न परिचिन्वन्ति ते कथङ्कारं तत्रोपकारापकारौ समीक्षेरन्निति लक्षणान्तरमुपदिशति—

## कोऽयमुपकारोऽपकारो वा केन कृत इत्यन्वयव्यतिरेकाभ्यां स्थिरीकरणम् ॥ ११ ॥

कोऽयमिति । अयं विषयोपलब्ध्यनन्तरं रागद्वेषनिवृत्तावनुभूयमानः । कः स्वस्थतायाः क्षणिकत्वेन विषयस्यातिसूक्ष्मत्वेन च झटिति निश्चेतुमशक्यतया संशयितः । उपकारो विषयपराङ्मुखतया स्वाभिमुखत्वेनानन्दाविर्भावः, आहोस्विदपकारो रागद्वेषप्रयोजकतया पुनर्जन्मादिहेतुः, केन रागेण द्वेषेण विषयेण परेण वा कृत इत्यन्वय-

व्यतिरेकाभ्याम् । येनैव यदुत्पद्यते तयोरन्वयः, येनैव विना यन्नोत्पद्यते तयोरभावप्रतियोगिनोर्व्यतिरेकः । ताभ्यां भावाभावावस्थयोः संशयनिराकरणेन प्रत्यक्षानुभूयमानपरिचयस्य स्थिरीकरणम् । संशयेन चञ्चलः परिचयस्तन्निवर्तनेन प्रमया स्थिरीक्रियते ॥ ११ ॥

अथ प्रकृतं व्यवस्थाप्यते । सुखत्वेनालम्बुद्धित्वेन च सुखविवेकयोः साध्यसाधनभावनिश्चयेऽपि, जीवानां तारतम्येन सुखोपलब्ध्या, यादृशं सुखं तादृशो विवेकस्तस्य साधनमिति तारतम्येन लक्ष्यतावच्छेदकस्यैकत्वेऽपि विवेकस्यानन्त्यान्नैकेन लक्षणेन भवितुं शक्यते । किञ्च वस्तुतो न सुखत्वेन साध्यसाधनभावस्तस्य नित्यत्वात् । किन्तु सुखपरिचयत्वेन । यादृशो विवेकस्तादृशः सुखपरिचयः, तादृशस्तदर्थं प्रयत्नः । तथा च भ्रान्तानां भ्रमात्मको विवेकः सुखपरिचयश्च, विदुषां प्रमात्मको विवेकः सुखपरिचयश्चेति मुक्तये नित्यसुखपरिचायको विद्वद्विवेको लक्षित इति ॥

तथा च कथमनेन विवेकेन नित्यं सुखं परिचीयत इति निरूपयन् केनेति विवेकांशस्य फलं तावदभिव्यञ्जयति—

## उपकर्त्ताऽभिमुखयत्यपकर्त्ता हि पराङ्मुखयति॥१२॥

उपकर्त्तेति । अयमुपकार इति जानतोपकर्त्ता विज्ञायते । विज्ञायमान उपकर्तोपकारं जानन्तमात्मानमभिमुखयति, प्रतिबिम्बितः संस्करोति च । संस्कृतश्चात्मा पुनः पुनरुपकर्त्तारमपेक्षते । तथाऽयमपकार इति जानताऽपकर्त्ता विज्ञायते । विज्ञायमानोऽपकर्ताऽपकारं जानन्तं

स्वभावतोऽभिमुखमात्मानं प्रतिविम्बितः संस्कुर्वन्विद्वेषमुत्पादयन्पराङ्मुखयति । विद्वेषं महान्तं रिपुं जानन्नात्माऽमुतो विभ्यद्विद्वेषविषयमुपेक्षत एव ॥ १२ ॥

विवेकिनामुपकर्त्तुरपेक्षयाऽपकर्त्तुरुपेक्षया च किं भवतीति तयोर्फलं दर्शयति—

## चिरं सत्कारपूर्वकनिरन्तरविवेकाभ्यासेन हिताहितसंस्कारो दृढतमो भवति ॥ १३ ॥

चिरमिति । अनेन बहिर्मुखतानिरोधेन महानुपकारः क्रियते, नित्यसुखं परिचाययिष्यत इति करिष्यते चेति सत्कारपूर्वकेणोपकारदृशा निरन्तरेण चिरं बहुकालं विवेकस्याभ्यासेन पुनः पुनरनुष्ठानेन हिताहितसंस्कार आत्मनि हितात्मनोपकर्त्ताऽहितात्मनाऽपकर्त्ता प्रतिविम्बितो भवति । उपकर्त्तुर्हितरूपेण, अपकर्त्तुरहितरूपेण (?प्रति + )विम्बो भवति । प्रतिविम्बनेनैवात्मनि संस्कारः स दृढतमः, अतिशयेन दृढः, पुनः पुनः प्रतिविम्बनेन विस्पष्टः, पदे पदे स्मारको भवति ॥ १३ ॥

ननु पदे पदे स्मरणेनोपकर्त्तरि रागोऽपकर्त्तरि विद्वेषोऽवश्यम्भविष्यतः, याभ्यां नियन्त्रितो जन्मादिसंस्कारमनुभवन् पदे पदे सन्तपतीति कोतो(?=कुतो)ऽनर्थमुपदिशतीति तत्राह—

## दृढतमो हि संस्कारस्संस्कारान्तरमन्तर्दधाति १४

दृढतम इति । दृढतमो हि भ्रमात्मकः संस्कारोऽभ्रमात्मकं संस्कारान्तरमन्यसंस्कारमपकर्त्तरि प्रीतिजनकमुपकर्त्तरि विद्वेषजनकं महामोहमहिम्ना प्रातिपदिकाभ्यासेन सुदृढमन्तर्दधाति फलप्रतिबन्धेनात्मन्येव स्थापयति। नासावुद्बोधकविरहेणात्मानं किमपि कर्त्तुं शक्नोति। आहारविरहेण देह इव चरमदशां गमिष्यति न पुनरुत्पद्यते॥१४॥

विपरीतसंस्कारान्तर्धानफलं दर्शयति—

## ततः सत्सु प्रवर्त्तत इतरतो निवर्त्तते॥ १५ ॥

तत इति । दृढतमेन संस्कारेण शनैः शनैर्विपरीतसंस्कारनिःशेषीकरणात्परमभ्यासवशेनाचकितहृदयः सत्सु, प्रमागोचरतयाऽबाधितविषयेषु सत्स्वरूपेषु, सच्चिदानन्दलक्षणं नित्यमात्मानमात्मत्वेन साक्षादनुभवत्सु, सदेवास्मीति कृतनिश्चयेषु, महात्मसु पण्डितेषु प्रवर्तते । कायेन वाचा चेतसा चारम्भं विधत्ते । कायिकं वाचिकं मानसिकं च सर्वारम्भं सत्सम्बद्धमेव कुरुते । तथेतरतोऽसतोऽन्यथाभूताद्, भ्रान्तिविषयात्, सत आत्मनो भिन्नमसन्तमात्मानं विजानतः, मोहाक्रान्तहृदयाद् राजसतामसात् संसारिणो निवर्त्तते । न तस्मिन् कायिकं वाचिकं मानसिकं चारम्भं करोति । दृढतमाभ्याससंस्कारवशेन विवेकानुरूपमेव सर्वदा चेष्टते । न तु कदाऽपि कुत्राऽपि कथमपि क्षणमपि विवेकात्पराङ्मुखो भवति ॥१५॥

सत्प्रवृत्तेरसाधारणफलं दर्शयति—

## सत्सङ्गमहिम्ना सन्तमसन्तं च सम्परिचिनोति ॥१६॥

सत्सङ्गेति । सतां सङ्गः । इमे सन्त इति भावेन सत्त्वगुणप्रधानानां महात्मनां निरन्तरसहवासः । तस्य महिम्ना प्रभावेण सन्तं सत्त्वगुणप्रधानं महात्मानं प्रमाविषयं वा तद्विपरीतिमसन्तं च सम्यरिचिनोति । निरन्तरं सह वसन्नेव सद्धानः (?=श्रद्धानः), प्रात्यहिककृत्यमवलोकमानः, कायेन वाचा चेतसा च समाराधयन्, प्रसादाभिमुखं महात्मानमवलोक्य, सम्प्रश्नादिना प्रतिपदं संशयनिवर्त्तनेन, तदाचारेण तदुपदेशेन चात्मनि पवित्रतां सम्पादयंस्तदनुकम्पया कृतपवित्रबुद्धया सद्गुणान् सत्त्वगुणकार्यभूतानसद्गुणान् राजसतामसगुणान् सम्यक् परिचिनोति । सद्गुणासद्गुणसम्परिचयेनैव सद्गुणानवलोक्य सन्तमसद्गुणान(? + वलोक्या)सन्तं च सम्परिचिनोति । न कदाऽपि विज्ञानरहितं बकवत्समाहितं निर्दयं जटादिना कृतविचित्रवेषं दाम्भिकं महात्मानं विजानाति ॥ १६ ॥

सत्सङ्गमहिम्ना सम्परिचितसद्गुणासद्गुणफलं दर्शयति—

## सम्परिचयः प्रवृत्तिनिवृत्ती द्रढयति ॥ १७ ॥

सम्परिचय इति । सद्गुणासद्गुणसम्परिचयः परमानन्दानुकूलतया सम्परिचितेषु सत्सु प्रवृत्तिं, कायिकं वाचिकं मानसिकं चारम्भं, परमापदनुकूलतया सम्परिचितेभ्योऽसद्भ्यो निवृत्तिं, कायेन वाचा मनसा चात्मनः पराङ्मुखतां च, दृढां परैर्बाधितुमशक्यां करोति॥१७॥

प्रवृत्तिनिवृत्त्योर्दृढतायाः फलं दर्शयति—

सत्सु प्रवर्त्तमानः सत्यमसत्स्वसत्यं प्रतिपदं वर्द्धयते ॥ १८ ॥

सत्स्विति । सत्सु दृढं प्रवर्त्तमानः सत्यं विज्ञानानुरूपं कायेन वाचा चेतसा च मोहादिरहितं वर्त्तनं, तथाऽसत्सु विज्ञानविपरीतं कायेन वाचा चेतसा च मोहादिकैङ्कर्येण वर्त्तनमसत्यं प्रतिपदं वर्द्धयते । आयासवृद्धिं विनाऽपि द्विगुणीभवनरूपेणोभयविधव्यवसायस्यैकविधीकरणेनेतरविलयसाधनेनाल्पीयसा समयेन पूर्णमेधयते ॥१८॥

शक्तो हि स्वसाध्यं साधयते । शक्तिश्च विपक्षविलयेनैवोद्बुध्यते ; विपक्षविलयश्च स्वसमृद्ध्या पराभ्युदयसाधननिवृत्त्या सम्पद्यते । इत्येवं सति हि स्वसाध्यसिद्ध्या समेधते । इति समेधितयोः सत्यासत्ययोः फलं दर्शयति—

विवृद्धं सत्यमधर्मादसत्यं धर्मान्निवारयति ॥१९॥

विवृद्धमिति । लोको यथा पुत्रपौत्रप्रपौत्रादिबहुसमृद्ध्या विवर्द्धते, इत्येवं शौचसन्तोषतितिक्षाश्रद्धाभक्तिप्रभृतिभिर्विवृद्धं सत्यमधर्मात्, तथा मोहरागद्वेषाभिमानलोभप्रभृतिभिर्विवृद्धमसत्यं धर्मान्निवारयति । कथञ्चिदुपजायमानमुत्साहं प्रतिबध्नाति । उत्साहसाधनात्पराङ्मुखयति, बलादात्मानं भीषयति च ॥ १९ ॥

ननु सत्यादयो धर्मा असत्यादयो ह्यधर्मा इति सुप्रसिद्धमुपेक्ष्य धर्मा अधर्माश्च केऽभिप्रेयन्त इत्याह—

**प्रसादयन्ति ये ते धर्मा ग्लानिं जनयन्तः पश्चात्तापयन्ति ये तेऽधर्माः ॥ २० ॥**

प्रसादयन्तीति । य आत्मानं प्रसादयन्ति, आत्मनः प्रसादमुपजनयन्ति । संस्कारविशेषा विक्षेपं विनिवर्त्तयन्तः प्रतिक्षणमात्मानमुपशमयितुमीहन्ते, प्रकृतिस्थं कुर्वन्ति । यथा वक्ष्यादिना मलापनयनेन सम्पादिताः संस्कारा धातूनभिज्वलयन्ति प्रकृतिस्थान् कुर्वन्ति तथा ते ह्यात्मनो धर्माः । ये च तत्कालं ग्लानिं जनयन्ति, हर्षक्षयं कुर्वन्ति, आत्मनः प्रसादमपहरन्ति, मालिन्यं सम्पादयन्ति, कृतहिंसादिसंस्कारातथा तत्कालं सुखयन्तोऽप्यनध्ययनादिना मूर्खतासम्पादनेन सम्पादिता विपरीतविज्ञानसंस्काराः, अहिते हितज्ञानसंस्काराः, हितेऽहितज्ञानमंस्काराः पश्चात्तापयन्ति, फलप्रापणादशायामुद्वेजयन्ति, ते संस्कारविशेषा अधर्माः ॥ २० ॥

अथ विविधविषयोपभोगसञ्जनितसंस्कारा विविधनवनवविषयान्तरोपभोगसम्पादनाभिमुखमेवात्मानं विदधतस्तदाशादिजनितविविधविपदमाच्छादयन्तो विपत्साधनेनैव सम्पादितां संपदमाक(?+ल) यन्तो महामोहमहिम्ना शूकरादिशरीरतादात्म्याभिनिवेशेन तत्तच्छरीरस्वभावानुरूपं प्रसादयन्त्येवेति तेऽपि किं धर्मा इति लक्ष-

णान्तरविषयोक्तलक्षणमनुगमयति—

विवेकफलानि मोहफलानि वा ॥ २१ ॥

विवेकेति । न ते धर्माः । विवेकफलानि धर्मा भवन्ति । विवेकस्य फलानि, विवेकः फलं येषां तानि वा । सामान्यदशा प्रयुक्तमन्तरङ्गं नपुंसकत्वं विशेषदशोपस्थितं पुंस्त्वं न बाधते, बहिरङ्गत्वात् । अन्यथा शब्दापशब्दान्यतरानुशासननियमप्रसङ्गे "शक्यं चानेन श्वमांसादिभिरपि क्षुत्प्रतिहन्तुम् । तत्र नियमः क्रियते । इदं भक्ष्य-मिदमभक्ष्यम्" ( महाभाष्ये पस्पशाह्निके ) इति महाभाष्यं न सङ्ग( ?+च्छते । अ )त्रापि तत्पुरुषो बहुव्रीहिर्वा । उभयत्र बहुव्रीहिरेव वा ॥ २१ ॥

धर्माधर्मप्रतिबन्धकत्वेन सत्यासत्ये निरूप्येदानीं धर्माधर्मयोर-समवायिकारणतां निरूपयितुं तयोर्लक्षणान्तरमुपदिशति—

ये सत्यं ये चासत्यमुपजीवयन्ति वा ॥ २२ ॥

ये सत्यमिति । अस्तीत्याकारकप्रतीतिविषयः सन् । सतो भावो, येन रूपेण सत्प्रतिभासते तत्सत्यम् । अभिनयेनेन्द्रियेणान्तःकरणेन च यत्प्रत्याय्यते, तत्प्रतीतिविषयतयाऽनुरक्तमेव यत्कायेन व्यवह्नि-यते, वाचा निगद्यते, अन्तःकरणेन बुध्यते, तत्सत् । सदविरहितं कायेन वर्त्तनं कायिकं, वाचा निगदनं वाचिकं, मनसाऽनुचिन्तनं मा-नसिकमित्येवं त्रिविधं सत्यं य उपजीवयन्ति, विना न भवन्ति, ते

धर्माः । तद्विपरीतमसत्यमन्यथा कायादिभिर्वर्त्तनं निगदनमनुचिन्तनं य उपजीवयन्ति तेऽधर्माः ॥ २२ ॥

असमवायिकारणमुखेन परिचाय्यासाधारणफलमुखेन परिचाययति—

## ये प्रीणयन्त्यात्मानं ये च बध्नन्ति वा ॥ २३ ॥

ये प्रीणयन्तीति । आत्मानं ये प्रीणयन्ति तर्पयन्ति । सच्चिदानन्दतत्स्वरूपाभिमुखीकरणेन तस्मै परमानन्दं समर्पयन्ति । निखिलविषयसंस्कारोद्बोधनशक्तिरूपकषायपरिशोधनेन पवित्रता ह्यात्मानो(?=ह्यात्मनो)धर्मः। तस्य फलमलम्बुद्ध्या यथावत्परिचयो विवेकः। तथा च धर्मा एव विवेकेन विषयेभ्यः पराङ्मुखयन्त आत्मानं प्रीणयन्तीति। ये च प्रियतमभोज्यसमर्पणमिषेण तृणाच्छन्नगर्त्ते निपातितं मत्तदन्तिनमिवाज्ञानाच्छन्नसंसारसागरे निपातितं मोहेन रज्ज्वा बध्नन्ति, जन्मादिविविधविपदमनुभावयन्ति, न कदाऽपि मुञ्चन्ति, प्रतिपदं व्याकुलयन्ति, ते विविधविषयानुरागमालिन्यभूतसंस्कारा अधर्माः ॥ २३ ॥

तथा च धर्मसिद्ध्यर्थमधर्मनिवृत्त्यर्थं च कथं वर्त्तितव्यमिति तयोः साधनभूतानि कर्माणि लक्षयति—

## आयासयन्ति प्रीणयिष्यन्ति कर्माणि धर्ममितराणीतरमुपकुर्वन्ति ॥ २४ ॥

आयासयन्तीति । आयासमात्मनः प्रयत्नं कुर्वन्ति, जनयन्ति, तथाऽऽत्मानं प्रीणयिष्यन्ति तर्पयिष्यन्ति, श्रुतिस्मृतिसूत्राद्यध्ययनादीनि कर्माणि धर्मम् ; इतराणि श्रुतिस्मृतिसूत्राद्यध्ययनादिविरुद्धानि व्यभिचारादीनि कर्माणि इतरमधर्ममुपकुर्वन्ति । सत्समागमादिसाधनसम्पत्त्या वारवधूटीसमागमादिसाधनसम्पत्त्या तत्तदनुरूपसामग्रीं सम्पादयन्ति ॥ २४ ॥

एवं चतुर्विंशत्या सूत्रैः सुखं तत्साधनं तदुपयोगीनि चोपदिश्य दुःखतत्साधनतदुपयोगिप्रकरणं निरूपयन्दुःखलक्षणं सूत्रयति—

## सविषया स्थितिर्दुःखम् ॥ २५ ॥

सविषयेति। प्रतिक्षणमभिमुखीकरणेन सच्चिदानन्दतत्स्वरूपात् पराङ्मुखयन् स्वस्मिन्नेव विशेषेण सच्चिदानन्दतत्स्वरूपावरणेन सिनाति बध्नाति विषयिणं करोति, असज्जडदुःखस्वरूपप्रतिबिम्बं ग्राहयित्वा स्वस्य विनाशेन विनाशिनं चैतन्यविषयत्वेन जडं दुःखेन दुःखिनमात्मानमात्मनाऽनुभावयतीति विषयो वेद्यपदार्थः । तेन सह वर्त्तत इति सविषयाऽऽत्मनः स्थितिर्दुःखम् ॥ २५ ॥

विस्मृतानुसन्धानादिदशायां स्मृतिविरहसमकालं सविषयस्थितेरभावेऽपि महद् दुःखमुपतिष्ठत इत्येतदव्याप्तमिति लक्षणान्तरं सूत्रयति—

## पराङ्मुखता वा ॥ २६ ॥

पराङ्मुखतेति। परं सच्चिदानन्दविलक्षणं पश्यति पूजयत्यादि-थत(?) इति पराक् चैतन्यम् । तादृशं चैतन्यं मुखं प्रधानं यस्यात्मनस्तद्भावः पराङ्मुखता वा दुःखम् ॥ २६ ॥

कदाचिदकस्माद्विषीदति, कथमपि विषादकारणं न परिचिनोतीत्यनेनापि सन्तपति, किमपि विषयं न करोति, पुनः पुनरुद्विजते, रोदितीव शोचतीवेत्येतद्दशायां पराङ्मुखताऽपि नात्मन इतीदमव्याप्तमिति लक्षणान्तरं दर्शयति—

स्वानभिमुखता वा ॥ २७ ॥

स्वानभिमुखतेति। उक्तदशायां पराङ्मुखताया अभावेऽपि स्वानभिमुखतायाः सत्त्वेन दुःखं न लक्षणमिदं व्यभिचरतीति नाव्याप्तिः ॥ २७ ॥

अथापि दुःखविरहदशायां सुषुप्तावज्ञानाभिमुखत्वेन स्वानभिमुखतायाः सत्त्वेन लक्षणमतिव्याप्तमित्यत आह—

अन्यथास्फुरणं वा ॥ २८ ॥

अन्यथेति । सच्चिदानन्दवैलक्षणेन ( ?=वैलक्षण्येण) स्फुरणं सच्चिदानन्दानवगाहि चैतन्यं दुःखं प्रतिभासते ॥ २८ ॥

दुःखनिवृत्तिमभिलषतां तत्साधननिवृत्तौ यत्न आवश्यकः । साधनमनिवर्त्त्य साध्यं निविवर्त्तयिषोः प्रयत्न उन्मत्तचेष्टितमिवोपेक्ष्य इति प्रवृत्तेर्ज्ञानपूर्वकत्वेन दुःखं निवर्त्तयितुं तत्साधनं ल-

न्नयति—

तस्य साधनमिच्छाद्वेषौ ॥ २९ ॥

तस्येति । चतुर्भिः सूत्रैर्लक्षितस्य दुःखस्य साधनम् । साध्यतेऽनेनेति विग्रहे करणे ल्युट् । करणं व्यापारवदसाधारणं कारणम्। व्यापारः प्रवृत्तिस्तज्जन्यत्वे सति तज्जन्यजनकत्वात् । इच्छाद्वेषौ । इच्छा ह्याहत्य प्रतिहता द्वेषात्मना विपरिण(१+म)ते । अत्यन्तविलक्षणत्वेन द्वेषस्योपादानम् । तथा चेच्छापरिणामविशेषा मोहकामदम्भादयो, द्वेषपरिणामः क्रोधश्च साधनम् ॥ २९ ॥

कथं निश्चीयत इच्छायां द्वेषे च दुःखसमवायिकारणतेत्यत आत्मनोऽवस्थामनुग(१+म)यति—

शाम्यन्निच्छन्द्विषन् हि प्रतीयते ॥ ३० ॥

शाम्यन्निति । स्वस्मिन्नेव स्वकारणतया स्फुरणं विलीय निर्विकल्पोऽन्तर्मुखः स्वस्थ आत्मा रजस्तमोऽन्तर्धानेन शाम्यन् स्वयम्प्रकाशतयाऽऽत्मनैवानुभूयते । निखिलविषयाभावसाक्षित्वेन प्रकाशते। बहिर्मुखतादशायान्तु किमपीच्छन् किमपि द्विषन्वेत्येवं द्विधैव प्रतीयते । विषयीकरणावस्था हि बहिर्मुखतादशेत्युच्यते । सत्त्वेन सन्तुष्टः शाम्यन्, रजसा विक्षिप्त इच्छन्, तमसाऽऽक्रान्तो द्विषन्नित्येवं तिसृभिरवस्थाभिरुपलक्षित एवात्मा प्रतीयते ॥ ३० ॥

इच्छायां द्वेषे च दुःखासमवायिकारणतानिश्चयार्थमात्मनोऽवस्थात्रितयमनुगमितं, परं निश्चयो न जायत इति तत्र तन्निश्चायकतां घटयति—

इच्छन्तं द्विषन्तं च विषया अभिमुखयन्ति ॥३१॥

इच्छन्तमिति । स्वभावतोऽभिमुखे स्वयमेव विषयाः प्रतिबिम्बन्ति, यत्प्रतिबिम्बेन संस्कृतो भवति तमेव विषयमिच्छति, प्रतिहतेच्छो द्वेष्टि चेति तादृशमेवात्मानं विषयाः शब्दादयोऽभिमुखयन्ति, विषयिणं कुर्वन्ति, स्वसरूपतां प्रापयन्ति, न त्वनुभवन्तमनुभूतवन्तं वाऽभिमुखयन्ति; यावत्प्रतिबिम्बानामात्मनि संस्कारजनकत्वानुपलम्भात् ॥ ३१ ॥

मोहादय इच्छापरिणामविशेषा इत्युक्तं समञ्जसयति—

इच्छन्निह मुह्यति रज्यति स्मरति शोचति ॥३२॥

इच्छन्निति । इच्छन्नेव मुह्यति, न परिचिनोति, सुखमनेन भवेद् दुःखं वेति निर्णेतुं न शक्नोति । रज्यति, गुणैराकृष्यमाणो दोषान्न पश्यति, विमुखीभवितुं न शक्नोति। स्मरति, तत्रत्यान् गुणदोषाननुसन्धत्ते । शोचति, प्रतिबन्धकबलवत्ताभ्युपगमेन प्रतीयमानं वियोगं न सोढुं शक्नोति, गुणानुसन्धानेन विषीदतीति उपादानकारणं तेषामिच्छैव । तथैतन्नाशेन मोहादीनां विनाशादसमवायिकारणं च सा तेषाम् ॥ ३२ ॥

सर्वेषां पदार्थानामात्माधिष्ठितत्वेन युगपत्प्रतिबिम्बानां सम्भवात् सर्वे ऽपि विषयाः स्वाभिमुखयेयुरात्मानमित्यत आह—

## यदभिमुखो भवति तत्प्रतिबिम्बति ॥ ३३ ॥

यदभिमुख इति । यं पदार्थमभिमुखं स्फुरणं भवत्यात्मनस्तत्पदार्थजातं तत्र प्रतिबिम्बति, अभिमुखतायाः प्रतिबिम्बप्रयोजकत्वात् । इदमत्रानुसन्धेयम्। आत्मन्यधिष्ठिता अपि सर्वे पदार्थाः केऽपि न प्रतिबिम्बन्ति, सामान्यचैतन्यस्य प्रतिबिम्बाकरण-(१=-बिम्बकारण- *or* -बिम्बकरण-) शक्तेरनुपलम्भात् । अत एव स्फुरणस्यैव चैतन्यत्वप्रतीत्या केचिज्ज्ञानगुणकत्वेनैवात्मानं निरूपयन्ति, सुषुप्तौ मूर्च्छायां च चैतन्यानुपलब्ध्या सविषयकत्वं च कल्पयन्ति । निर्विषयत्वेन तस्य निरूपयितुमशक्यत्वात् । अन्ये तु स्फुरणस्यैवात्मत्वं निरूपयन्ति, तद्व्यतिरिक्तस्यात्मत्वेन चेतनत्वेनाहमस्मीत्येवं रूपेणानुपलम्भात्तदेव यावन्मुक्तेरबाधितधारमत एव नित्यमिति कल्पयन्ति च ॥ ३३ ॥

अभिमुखतायाः प्रतिबिम्बप्रयोजकत्वेनोपस्थितेस्तद्धेतुजिज्ञासाया अवश्यम्भावेन तां पूरयति—

## अभिमुखीभवने स्वभावः संस्कारश्च हेतुः ॥३४॥

अभिमुखीभवन इति । अभिमुखीभवनं नाम सामान्यरूपेण सर्वं व्याप्य स्थितस्यात्मनो विशेषात्मना स्फुरणम् । तत्र स्वभावो

हेतुः । आत्मातिरिक्तो नास्ति हेतुः, किन्तु स्वयमेव स्फुरत्यात्मा । परं यदभिमुखं स्फुरति तदेव प्रतिबिम्बति, तदेव संस्करोति, विशेषरूपेण प्रतिबिम्बग्रहणात्। विशेषरूपेणात्मा यत्प्रतिबिम्बमग्रहीत्तदभिमुखीभवने तत्संस्कारश्च हेतुः । केनापि प्रकारेणोद्बुद्धः संस्कारस्तदभिमुखयत्येवात्मानम् ॥ ३४ ॥

व्यवहितविप्रकृष्टानां श्रुत्यैवावगतानामनुभूतपूर्वाणां च तत्तद्देशस्थितपदार्थानां तत्तदभिमुखेऽप्यात्मनि कुतो न प्रतिबिम्ब इत्यत आह—

## प्रतिबिम्बनप्रयोजकं सन्निधानम् ॥ ३५ ॥

प्रतिबिम्बनेति । स्वभावतः संस्कारतो वा यदभिमुखो भवति तस्य सन्निधानं समीपस्थितिः प्रतिबिम्बनक्रियायाः प्रयोजकम् । स्वाभिमुखेऽप्यात्मनि सन्निहित एव पदार्थः प्रतिबिम्बति, न व्यवहितः=केनाप्यावृतो, नवा विप्रकृष्टः=दूरे स्थितः ॥ ३५ ॥

यत्रात्मनः स्फुरणं तदवच्छिन्नानां सन्निहितानामपि तत्र प्रतिबिम्बो न भवति । तथा व्यवहितविप्रकृष्टानां केषांचिद्बाह्यानामपि प्रतिबिम्बो भवतीति कथमुक्तं सन्निधानस्य प्रतिबिम्बनप्रयोजकत्वमित्यसमञ्जसं समाधत्ते—

## इन्द्रियैर्विषयाः सन्निधीयन्ते ॥ ३६ ॥

इन्द्रियैरिति । श्रोत्रादिभिर्ज्ञानेन्द्रियैः स्वाभिमुखसन्निहितोद्भूत-

विषयाणां प्रतिविम्बमात्मने समर्पयद्भिर्विषयाः शब्दादयः सन्निधीयन्तो विम्बप्रतिविम्बयोर्भेदं निरस्य बाह्यत्वेऽप्यन्तर्हिताः सन्निहिताः क्रियन्ते। प्रतिविम्बो हि शब्दादीनां चैतन्ये प्रतिविम्बति न विम्ब इति प्रतीतिं निवार्य बाह्यत्वेन विम्बभूता विषया एव प्रत्यर्प्यन्ते। विचित्रा शक्तिरेषेन्द्रियाणाम् ॥ ३६ ॥

स्फुरणस्यैव चैतन्यत्वं प्रतिपाद्यते नात्मन एवमत्रैव परेषां संमतिश्चेति किं चैतन्यव्यतिरिक्तत्वेनात्मनो जडत्वमभिप्रेयते आहोस्वित् स्फुरणस्य चैतन्यत्वेऽपि चैतन्यं ज्ञानादि तदाश्रय आत्मा शब्दादीन्विजानातीति नात्मनो जडत्वं किन्तु चैतन्यस्यैवेत्यत्राह—

## अस्तीत्येव साक्षात् क्रियते ॥ ३७ ॥

अस्तीति । विषयविमुखावस्थायामहङ्कारविलयेऽस्तीत्येवं प्रकारेणैव साक्षात् स्फुरणविषयः क्रियते, न तत्रत्यो विशेषोऽनुभवितुं शक्यते । अत एवात्मा निर्विशेषोऽनिर्वचनीयश्च कल्प्यते, बहुविधा उपनिषद्गाथाश्च सङ्गच्छन्ते । किञ्च विषयीकरणं चैतन्यस्य चेतनस्य वा धर्मः, तथा विषयीभवनं जडस्य धर्म इति चैतन्यव्यतिरिक्तस्य विषयीकरणशक्त्यनुपलब्ध्या विषयीभवनोपलब्ध्या च चैतन्यविषयीभूतं नात्मानमभ्युपगच्छन्तीत्यबाधितधारं नित्यं चैतन्यमेवात्मानं निरूपयन्ति । परे तु विषयीभवनं नाम स्वप्रतिविम्बसमर्पणम् । विषयीकरणन्तु प्रतिविम्बाकर्षणम् । तथा चोभे अपि नात्मनि सङ्घटेते । नात्मनः प्रतिविम्बमाकर्षति चैतन्यं किन्तु

तदभिमुखं सत्स्वयमेवाकृष्यत इत्येवं प्रतिभाषयन्ति ॥ ३७ ॥

केचित्परमाणुभूतं चैतन्यमात्मानमत्रगच्छन्ति, केचिद् देहमात्रव्यापिनं, केचित्क्षणिकविज्ञानं, केचिन्महत्परिमाणकं चैतन्यं, केचिच्चैतन्यगुणकं महत्परिमाणकं, केचिच्चितिजडोभयात्मकमित्येवं बहवो बहुधा प्रकल्पयन्ति। तेषां सर्वेषां विशेषाणां स्वसाक्षात्कारविरहेण तत्तत्कर्तृकसाक्षात्कारः कथं प्रतिहन्यते, बहुकर्तृकसविशेषसाक्षात्कारेण निर्विशेषसाक्षात्कारस्तव कुतो न प्रतिहन्यत इत्यत आह—

## परकृतविशेष( = षा)सम्भवश्च तत्र ॥ ३८ ॥

परकृतेति । तत्र आत्मनि स्वतोऽविशेषभावेऽपि परैर्भिन्नैः कैरपि कृता विशेषा न साक्षात् क्रियन्ते इत्येव नहि, अपि तु परः कृतानां नानाविधविशेषाणामसम्भवो योग्यताविरहश्च । साक्षात् क्रियत इत्यनुकृष्यते ॥ ३८ ॥

एकस्याऽनुभवेन बहूनामनुभवः कथङ्कारं प्रतिहन्येत, यद्येकस्यैव कस्यचिदनुभवो बहुभिः परीक्षाविचक्षणैरनुमन्येत बहूनामप्यनुभवो नाङ्गीक्रियेत, तदाऽपि साम्यमेव, नैकानुभवस्य बलवत्ता सम्पद्येतेत्यत आह—

## अनुमिते हि विवदमानाः श्रूयन्ते ॥ ३९ ॥

अनुमित इति । विवादस्य जयपराजयपर्यवसायित्वेनानुमान-

स्यासाधारणं प्रयोजनं शास्त्रार्थ एवेति शास्त्रार्थभूतविवादैकमतयः प्रत्यक्षमविगणय्यानुमानमेवावलम्बमाना नानाविधविशेषं कल्पयन्तो विवदमाना एव श्रूयन्ते । प्रत्यक्षानुमितिविरोधे प्रत्यक्षमेव बलीय इति सत्यैकशरणानां सर्वेषां परीक्षाविचक्षणानां सिद्धान्तमभ्युपेत्य निर्विशेषो निरूप[?=प्य]त इति सुधियो विभावयन्तु ॥ ३९ ॥

उपदेशश्च परार्थं प्रवर्त्तते न स्वार्थमिति परेषां प्रबोधोदयं यथाऽनुमानमुपकरोति तथा तु न प्रत्यक्षमिति प्रकृतेऽनुमानापेक्ष(?=क्षा)-या अवश्यम्भावेन किमित्यनुमानमुपेक्ष्यत इत्यत आह—

विकल्पाश्च न निवर्त्तन्ते ॥ ४० ॥

विकल्पा इति । प्रकृतेऽनुमानेनाबाधितनिश्चयो न जायत इत्येव न हि, अपि तु बहवो दुर्निवारा विकल्पा उद्भवन्ति यैः स्वास्थ्यं प्रतिहन्यते, विक्षेपेण चोपदेश्य आक्रम्यते, साक्षात्कारं विना स्वार्थं च न प्रतिपद्यते । साक्षात्कारविरोधिनो विकल्पा नानुमानेन निवर्त्तन्ते, अपि तूपजीव्यन्ते॥ ४० ॥

श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः ।
मत्वा च सततं ध्येय इति दर्शनहेतवः ॥

इत्यादिवाक्यान्यनुसृत्यानुमानस्यात्मसाक्षात्कारसाधनतामभ्युपेत्यानुमानेनात्मसाक्षात्कारं सिषाधयिषवो महान्तः पण्डिताः किमिति नानुस्त्रियन्त इत्यत आह—

पण्डितम्मन्या एव विजयन्ते ॥ ४१ ॥

पण्डितम्मन्या इति । अनुमिते अनुमितिविषये पण्डितम्मन्या आत्मानं पण्डितं मन्यन्ते, अहं पण्डित इत्यभिमन्यन्ते ते पण्डितम्मन्या एव, न त्वात्मानं साक्षात्कृत्येतराणि शास्त्रादीनि विस्मरन्तो जीवन्मुक्ताः प्रशान्तहृदयाः, विजयन्ते अभ्यस्तनिखिलानुमानप्रकरणानुसन्धानेन प्रतिभातनवनवविकल्पजालान्तरे निपात्य प्रतिपक्षिणं ततो विजयं लभन्ते । तस्मादनुमितिसामग्रीमुपेद्दयोभ्र(?=त्त)-माधिकारी साक्षात्कर्त्तुमेवात्मानं प्रयतताम् ॥ ४१ ॥

अथ "शाम्यन्निच्छन्द्विषन्हि प्रतीयते" (१।३०) इति सूत्रेण त्रिधा हि प्रतीयत आत्मेति निश्चाय्यते तत्कथं मत्यहङ्कारयोरनन्तर्भावादित्यत आह—

स्वभावतोऽभिमुखं यत्स्फुरति तदहङ्कारस्तन्मतिः॥४२॥

स्वभावत इति । स्वभावतः स्वाभिमुख आत्मनि यत्स्फुरति चैतन्यमाविर्भवति तदहङ्कारः=अहन्तावगाहि चैतन्यम् । तथाऽन्याभिमुख आत्मनि यत् स्फुरति तन्मतिः=इदन्तावगाहि चैतन्यम् । तथा च मत्यहङ्काराभ्यां परं विक्षेपसद्भावेन तदानीं विक्षेपविरहेणैनौ शान्तावन्तर्भवितुमर्हतः । वस्तुतस्तु शान्तिविक्षेपावेवावस्थे । एनयोरेव नानाभेदाः प्रतीयन्ते ॥ ४२ ॥

आत्मनि संस्कारप्रयोजिकां मतिं निरूप्य संस्कारफलं दर्शयति—

संस्कृतो हीच्छति ॥ ४३ ॥

संस्कृत इति । मतिरेव तत्तत्प्रतिबिम्बमाकर्षति येन संस्कृतो भवत्यात्मा इच्छति तत्तद्विषयेच्छावान्भवति, नासंस्कृतः ॥ ४३ ॥

संस्कारस्येच्छाप्रयोजकत्वे कुतो नात्मा विषादिकमिच्छतीत्यत आह—

प्रतिहतेच्छो द्वेष्टि ॥ ४४ ॥

प्रतिहतेच्छ इति । संस्कारवशेन प्रवर्त्तमानेच्छा दुःखसाधनमिदमिति मत्या प्रतिहता द्वेषात्मना विपरिणमत इति प्रतिहतेच्छो द्वेषवान् भवति । तथेच्छाविषयो द्वेषविषयो भवति । यदि विषे प्रवर्त्तमानेच्छा दुःखसाधनमिति मत्या न प्रतिहन्यते तदा कृतिमुत्पादयन्ती ग्राहयत्येव ॥ ४४ ॥

"अन्यथा स्फुरणं वा" (१।२८) इति सूत्रेण दुःखं लक्षितम् । तस्य साधनता "तस्य साधनम्" (१।२९) इति सूत्रेणेच्छाद्वेषयोर्निरूपिता कथं सङ्घटत इत्यत आह—

परमिच्छन्द्विषंश्चात्मानं न जानाति ॥४५॥

परमिति । यद्विषयकं भवति चैतन्यं तदेव प्रकाशयतीति चैतन्यस्वभावतः अन्यत्त्वात्रियत एवाज्ञानेन । तथा चेच्छाद्वेषपारतन्त्र्येणात्मनो बहिर्मुखतायाः सार्वदिकत्वेनाज्ञानावरणं न कदाऽपि विच्छिद्यते ॥ ४५ ॥

इच्छाद्वेषपारतन्त्र्येणात्मानमजानतः किं भवतीत्याह—

एवमज्ञानसंस्कारो दृढतमो भवति ॥४६॥

एवमिति । प्रातिपदिकपराङ्मुखतया मलिनसंस्कारसमृद्ध्या मलिनीभूतस्यात्मनोऽज्ञानसंस्कारो दृढतम आत्माभिमुखचैतन्याविर्भावं प्रतिबध्नन्निवर्त्तयितुमशक्यो भवति ॥ ४६ ॥

तथा सति किं भवतीत्याह—

विपन्नस्तपत्युपायं न पश्यति ॥४७॥

विपन्न इति । अत्यन्तबहिर्मुखतयाऽन्तर्मुखताया अलाभेन सुखार्थं यथाशक्ति यतमानोऽयं कश्चन नवं नवं विषयमुपलभमानोऽपि दुःखसमृद्ध्या विपन्नः सन्तपति, परं दुःखनिवृत्तेः सुखलाभस्य वोपायं न पश्यति । सुखसाधनत्वेन दुःखनिवर्त्तकत्वेन वा किमपि न पश्यति ॥ ४७ ॥

ततः परं किं करोतीत्याह—

विपदमसहमानः प्रयतते ॥ ४८ ॥

विपदमिति । यावच्छक्ति प्रयतमानो दृश्येष्वभिलाषपूरकतामनुपलभमानो विपदमसहमानो दृश्येभ्य उपरमंस्तूष्णींस्थितो यत्र तत्र क्वचित् प्रयतते । कथमियं विपन्निवर्त्तेतेति चिन्तयन् पर्यालोचते, यदृच्छालब्धमाचार्यवर्यमाराधयते, न किमपि दृश्यं पुना रागेण लिप्सते, य-

तो यतो दुःखं प्रतीयते ततस्ततः स्वयमेव निवर्त्तते, यथा यथा निवृत्त्या सुखमस्य भासते तथा तथा निवृत्तिं स्वयमेव वर्द्धयते, विचारपारतन्त्र्येणादृश्याभिमुखतया बहिर्मुखतां निवर्त्तयते ॥ ४८ ॥

समाराध्यमान आचार्यवर्ये बहिर्मुखतानिवृत्तौ च किं करोतीत्याह—

चिरं प्रयतमानः शनैः संस्कारं निवर्त्तयते ॥४९॥

चिरमिति । परमभक्त्या समाराधिताचार्यवर्यप्रदर्शितमार्गेण चिरं बहुकालं प्रयतमान आत्मानमनुसन्दधान आत्माभिमुखमेव चैतन्याविर्भावमभ्यस्यन् शनैः क्रमिकरीत्या संस्कारम् आत्माभिमुखचैतन्याविर्भावानभ्याससंस्कारं सार्वदिकबहिर्मुखचैतन्याभ्यासदृढतमसंस्कारं वा निवर्त्तयते उद्बोधनशक्तिविरहितं कुरुते ॥ ४९ ॥

ततः परं किं करोतीत्याह—

संस्कारशेषे हि स्वभावममनुसरन् विवेचयते ॥५०॥

संस्कारेति । संस्कारस्य चिरन्तनत्वेनात्यन्तदृढतया निःशेषतो निवृत्तिराहित्य एव स्वभावं सच्चिदानन्दलक्षणम् अनुसरन् तत्प्राप्त्यनुरूपमार्गेण गच्छन् विवेचयते । शान्तिविक्षेपविवेचनां कुरुते । शान्तेर्विक्षेपस्य च स्वरूपं विविच्य पृथक् पृथग् जानाति, चिरं विवेकाभिमुखत्वात् ॥ ५० ॥

तादृशः सन् किं करोतीत्याह—

विवेकी विरज्यत उपशाम्यति च ॥ ५१ ॥

विवेकीति । न कुत्राप्यनुरागं करोति । अनुरागनिवृत्त्योपशान्तो भवति । न कदाऽपि विक्षेपमङ्गीकरोति । विक्षेपभयाद्यदृच्छालाभेन सन्तुष्टो भवति । महता क्लेशेन विक्षेपं सहते । विक्षेपनिवृत्त्युपायं सदैवानुसन्धत्ते ॥ ५१ ॥

इतः परं किं करोतीत्याह—

उपशान्तः स्वभावमेवानुसरति ॥ ५२ ॥

उपशान्त इति । न कदाऽपि सच्चिदानन्दलक्षणस्वभावपराङ्मुखो भवति । किन्तु सच्चिदानन्दस्वरूपेणैव निर्विकल्पो भासते ॥५२॥

ततः परं कथं चेष्टत इत्याह—

इच्छन्द्विषन्नपि स्वभावं नापलपति ॥ ५३ ॥

इच्छन्निति । रजसा विक्षिप्तस्तमसाऽऽक्रान्तोऽपि विक्षिप्तोऽहमिति मूढोऽहमित्यविक्रियाऽसङ्गपरमानन्दस्वभावं नापलपति । अन्यथा साधयति । इच्छाद्वेषसमयेऽपि स्वरूपं न विस्मरति । दृढाभ्यासमहिम्ना न कदाऽपि पराङ्मुखो भवति ॥ ५३ ॥

इतः परमपि कदाचित्प्रकृतिविलासेन मोमुद्य(१=ह्य)मानः प्रकृतिं

श्लाघमानो यथापूर्वं कुतो नासज्जत इत्याह—

अजानन्हि दुःखसाधनमाश्रयते ॥५३॥

अजानन्निति । प्रकृतिपरतन्त्रस्येदृशी दुर्दशा भवतीत्यजानन्नेव प्रकृतिं श्लाघमानः किमपीच्छति किमपि द्वेष्टि ॥ ५४ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यवर्यश्रीमत्पण्डितानन्तराममिश्रान्तेवासिना विरचितमुत्तमाधिकारोपेन्द्रविज्ञानसूत्रभाष्यम् ॥

---

एवमध्यात्मविद्याया उत्तमाधिकारिणामुत्तमाधिकारा निरूपिताः । इदानीं मध्यमाधिकारिणां मध्यमाधिकारा मध्यमश्रेण्यां मध्यमेन प्रकारेणोपदिश्यन्ते । तत्र प्रथमं किमुपदेशनीयमित्याह—

सम्यग्भाषापरिचयः कार्यः ॥ १ ॥

सम्यगिति । द्वितीये तृतीये वा जन्मतो वर्षे मात्रादिभिर्भाषायास्तत्तद्वर्णोच्चारणस्य ताल्वादिस्थाननिदर्शनेन परिचयो विविक्तविज्ञानमिदमक्षरमनेन प्रयत्नेनास्मात्स्थानादुद्भूय श्रोत्रं स्पृशतीति सम्यगितरभेदविज्ञानपूर्वकं संशयविपर्ययनिरासेन कार्यः कारयितव्यः । किञ्च भाषायाः शब्दार्थबोधनशक्तेः एतेन प्रयुज्यमानेन शब्देनायमर्थो बोद्धुं शक्यते, तथैतेन प्रयुज्यमानेन वाक्येनायमर्थो बोद्धुं शक्यत इत्येवं तत्तद्देशसङ्केतितानां शब्दानां तथा तत्तद्देशसङ्केतिततत्तदर्थे बोधनशक्तेश्च सम्यक्परिचयः कार्यः । तत्रायं क्रमः । प्रथमं

स्वमातृभाषायाः, ततः स्वदेशभाषायाः, ततः स्वधर्मप्रतिपादकभाषायाः, ततो राजकीयभाषायाः, ततोऽन्यदेशीयभाषायाः, ततो द्वीपान्तरीयभाषाया यथाशक्ति यथावकाशं सम्यक्परिचयः कार्यः यौवनात्पूर्वमेव सति सम्भवे ॥ १ ॥

कृतेन सम्यग्भाषापरिचयेन किं साध्यमित्याह—

विषयाणां श्रवणं मननं च ॥ २ ॥

विषयाणामिति। विशेषेणाविनाभावेन सिनन्ति भाषां बन्धन्तीति विषयास्तद्भाषाप्रबोधितपदार्थास्तेषाम् । श्रवणमसाधारणधर्मपुरस्कारेण मुख्यालक्षणाव्यञ्जनान्यतमशक्त्या श्रोत्रकरणकं बोधजननम्। ततः परं मननं पूर्वापरसकलविषयानुसन्धानेन यावत्संशयनिराकरणपूर्वकं बुद्धावारोहणं कार्यं सत्यां शक्तौ कर्त्तव्यम्। अन्यथाऽऽचार्यैः कारयितव्यं च ॥ २ ॥

उक्तश्रवणमननाभ्यां किं साध्यमित्याह—

निर्णीय सिद्धान्तानुसन्धानम् ॥ ३ ॥

निर्णीयेति । आचार्यानुकम्पया यावद्विप्रतिपत्तिनिराकरणेन निर्णीय निःशेषतो विकल्पजालं निवार्य । सिद्धान्तानां तत्तद्विषयविज्ञानकुशलैः सर्वैः पण्डितवर्यैर्यथावत्सम्मतानामनुसन्धानं स्मरणं कार्यम् ॥ ३ ॥

उ० वि० ५

अनुसंहितैस्तत्तद्भाषाप्रतिपादितसिद्धान्तैः किं कार्यमित्याह—

## प्रतिक्षणं तैरात्माऽनुकम्पनीयः ॥ ४ ॥

प्रतिक्षणमिति । तत्तत्सिद्धान्तानुरूपं वर्त्तनमात्मानुकम्पनम् ॥४॥

यदि निखिलसिद्धान्तानवगत्या यथावदात्मानुकम्पनं दुःशकं तर्हि किं सर्वेणाप्यायुषा सर्वसिद्धान्तावगतिः सम्पादनीया, उत या-वदुपलब्धैरेव सिद्धान्तैरात्माऽनुकम्पनीय इत्याह—

## नाध्ययनेनायुः समापनीयम् ॥ ५ ॥

नेति। पञ्चमवर्षाभ्यन्तर एव यथावद्वर्णपरिचयः कारयितव्यः। ततः सप्तमवर्षाभ्यन्तर एव पाणिनिमुनिकृतव्याकरणपञ्चकस्य पुस्तकनिरपेक्षोपस्थितिः स्वदेशभाषायथावत्परिचितिश्च कारयि-तव्या । तत उपनीय दशमवर्षाभ्यन्तर एव स्वशाखीयसंहिताया अनध्यायेषु व्यासकपिलपतञ्जलिगौतमकणादजैमिनिसूत्राणां च पुस्तकनिरपेक्षोपस्थितिः कारयितव्या । ततो वर्षद्वयेन व्याकरणा-नुरूपस्वदेशभाषायाः (१ = भाषायां or भाषया) सम्यग्वाल्मीकीयरा-मायणार्थोऽवगमयितव्यः। ततो वर्षद्वयेन क्रमेणाधिगतव्याकरणादि-सूत्राणामर्थो यथावद् ग्राहयितव्यः । ततो वर्षद्वयेनाधीतसंहितार्थो यथावद्बोधयितव्यः ।

इत्येवंसम्पादितविद्यः षोडशवार्षिकोऽधीतविषयानालोचमानो वर्षद्वयेनैव राजकीयभाषां विजानीयात् । ततो वर्षद्वयेनाधीतसूत्रभाष्या

णि सम्यगधीयानः साहित्यं विजानीयात् । ततो वर्षद्वयेन गणित-विद्यां च ।

इत्येवं घृतदुग्धैर्व्यायामेन च सुदृढकृतेन पथ्यभुजा नीरुजेन वपुषा यथावदधीयानो द्वाविंशतिवार्षिको ब्रह्मचारी चतुर्विंशति-तमवर्षाभ्यन्तर एव पण्डितः सम्पद्येत । तेनैहिकामुष्मिकं सर्वं कर्तुं क्षमो भवेत् ॥ ५ ॥

बहवो ग्रन्था उपलभ्यन्ते तेष्वेतावन्त एवाध्ययनीयतया प-रिगणिता अन्ये कुत उपेक्ष्यन्त इत्यत आह—

## न वाग्जालेषु प्रमदितव्यम् ॥ ६ ॥

नेति। एतावद्भिरेवाधीतैरितराण्यधीतकल्पानि भवन्तीति नार्थ-स्तेषामध्ययनेन । अनधिगतशास्त्रार्थानां परीक्षाविचक्षणविमुखानां व्यामोहैकनिधानानि । यथा व्याधैर्नानाविधानि जालानि विस्तीर्य क्षेत्रान्तरोत्पन्ना एव कणा जालान्तरितक्षेत्रेषु निक्षिप्यन्ते, तथेदानी-न्तनैः साहित्यचमत्कृतासु दुरवगाह्यासु नानाविधासु वाक्षु महर्षि-भिरनुभाविता एव प्रायशः पदार्था निक्षिप्यन्ते। किञ्च यथा लोभा-कृष्टहृदयाः पक्षिणस्तेषु प्रवर्त्तन्ते, निबद्धा आयुषोऽन्तं च गच्छ-न्ति, तथाऽध्येतारो भवन्ति। इतराणि वाग्जालानि । तेषु न प्रमदि-तव्यम् । स्वार्थसिद्ध्यै प्रवर्त्तनया स्वार्थसिद्धिर्न विहन्तव्येति ॥६॥

भवतु परिगणनमितराणि वाग्जालानि च सन्तु,परं तथाऽध्या-

पनसमुत्सुका यद्युपलभ्येरन्नित्यत आह--

प्रतिभावन्त उपशान्ताः पण्डिताः समाराधनीयाः ७

प्रतिभावन्त इति । नवनवोन्मेषशालिनी बुद्धिः प्रतिभा तद्वन्तः। उपशान्ताः कामाद्युद्वेगरहिता निरहङ्काराः। पण्डिताः सदसद्विवेकिनो विद्वद्वर्याः । बहूनि पण्डितलक्षणानि गीतोपनिषद्योगवासिष्ठादिषूपलभ्यन्ते। समाराधनीयाः। निष्कपटया श्रद्धया मनसा वाचा कायेन च परिचरणीयाः । पित्रादिभिर्बहुना प्रयत्नेन परीक्ष्य विद्वद्वर्येभ्यः शिष्यत्वेन समर्पितेन पुत्रादिना समाराधनीयाः ॥ ७ ॥

गीतादिषूक्तानि बहूनि पण्डितलक्षणानि अनुगमयति—

आत्मसा(+क्षा)त्कारो हि पाण्डित्यम् ॥ ८ ॥

आत्मेति । साङ्गाश्चतस्त्र ऋग्यजुःसामाथर्वणसंहिता ब्राह्मणान्युपवेदाश्च तथा सभाष्याणि षड्दर्शनानि अन्यानि च विज्ञानशास्त्राणि यथावदर्थतोऽधीतानि स्वरूपतोऽप्यभ्यस्तान्यात्मसाक्षात्कारफलप्रदानेनैव पाण्डित्यपदं प्राप्नुवन्तीति तान्यपि पण्डितलक्षणत्वेनाख्यायन्ते। वस्तुतस्त्वात्मसाक्षात्कार एव पाण्डित्यम्॥८॥

आत्मसाक्षात्कारविरहेऽपि पण्डितम्मन्यं तिरस्करोति--

अन्यो विज्ञानभारं वहति ॥ ९ ॥

अन्य इति । यथा भारवाहो पशुवदन्यार्थं भारं वहन्भारवेतनेन

जीवति। न तं भारः साक्षादुपकरोति । एवमात्मानं विविदिषोर्विदितवतश्चान्यो ग्राम्यसुखस्पृहाक्रान्तहृदयोऽध्यापनादिना विज्ञानं विक्रीणांस्तद्वेतनेन सम्पादितान्नवस्त्रादिना शरीरं तर्पयन्कृतार्थमिवात्मानं मन्यमानो विज्ञानात्मकं भारमेव वहति । भारमिव विज्ञानं परं पुरुषं प्रापयति, न तु स्वयमुपभुङ्क्ते ॥ ९ ॥

पर्याप्तविज्ञानस्यात्मसाक्षात्कारसाधनत्वेन विज्ञानसमृद्धये विज्ञानिसमाराधनावश्यम्भावेन समाराधनायां सौहार्दस्य प्रयोजकत्वेन सौहार्दबुद्धौ हेयबुद्धेः प्र(१+ति)बन्धकत्वेन संशय उत्पद्यते,तर्हि केन समं सौहार्दं विधेयमित्यत आह—

## यं न कदापि सत्यं विजहाति तेन मैत्री विधेया१०

यमिति । यं विज्ञानिनं सत्यं कदापि न विजहाति तेन सत्योपलक्षितेन विज्ञानिना समं मैत्री विधेया । आत्मनः समवायिकारणत्वेन सत्यस्यासमवायिकारणत्वेन विज्ञानस्य निमित्तकारणत्वेनैवं कारणकलापसम्पत्त्या धर्मावश्यम्भावेन पाण्डित्यसम्भाव-( १=-वना- or -वन- )या नेदृशो विज्ञानी तिरस्कारविषय इति भावः ॥ १० ॥

द्विविधो ह्यात्मनः स्फुरणात्मकः प्रवाहः, सत्याभिमुखोऽसत्याभिमुखश्चेति । तत्रान्यतरसमृद्धिनिरोधाभ्यां यस्मिन् (१=अन्यस्मिन्) ह्राससमृद्धयो( १+र )वश्यम्भावेन सत्यसमृद्धिरिवासत्यनिरोधोऽप्य-

वय(?=-वश्यम-)ङ्कार्य इत्याह—

असत्याद् दूरेऽपसरणीयम् ॥ ११ ॥

असत्यादिति । विज्ञानसागरस्थादप्यसत्याद् दूरेऽपसरणीयम् । न कदापि प्रचुरविज्ञानलाभसम्भावनया तत्रानुरागपरतन्त्रेण भवितव्यम् । यतोऽसत्यमाश्रित्यैव कामक्रोधलोभमोहमदमात्सर्यदम्भा उपतिष्ठन्ते ॥ ११ ॥

असत्यभयाद्विज्ञानोपेक्षायां जन्मनो वैयर्थ्यं स्यादित्यत आह—

सुखं म्रियेत न जीवेदसत्येन ॥ १२ ॥

सुखमिति । विज्ञानविरहेऽपि सकलानर्थमूलासत्यानिवृत्त्या सुखं म्रियेत । भविष्यत्सत्यमहाफलानुसन्धानेन मरणोत्तरं सुखमेव भवेदिति निश्चयजन्यं सुखं यथा स्यात्तथा प्राणानुत्सृजेत् । न त्वज्ञानजनितभयानुसन्धानेन मुह्येत् । न जीवेदसत्येन । सर्वज्ञत्वफलस्याप्यसत्येन निवर्त्तयितुं शक्यत्वात् ॥ १२ ॥

यथा सत्यमुपकरोति तथा सत्त्वं यथाऽसत्यमपकरोति तथा रजस्तमसी इति प्रसक्त्योपदिशति—

सत्त्वं वर्द्धनीयं न रजस्तमसी ॥ १३ ॥

सत्त्वमिति । अस्तीति सन्, सतो भावः सत्त्वम् । अन्वयव्यतिरेकाभ्यां विज्ञानसमृद्ध्या यद् यादृशं परिचीयते, यद्विषयकं विज्ञानं

विज्ञानान्तरेण कदापि बाधितुं न शक्यते, यद्विस्पष्टं प्रतिभासते, तत् सत् । सत्त्वञ्च यत्र विशेष्यतामवगाहते तत्सत् यत्र प्रकारता तत्सत्त्वम् । वर्द्धनीयं सत्त्वप्रतिबन्धसामग्रीनिवर्त्तनेन यथावद्भावनीयम् । तथा न रजस्तमसी । सतश्चाञ्चल्यं रजस्तथैषदावरणं तमः ।.१३॥

फलमुखेन सत्त्वरजस्तमांसि सूत्राभ्यां लक्षयति—

**येन विज्ञानं वर्द्धते तत्सत्त्वम् ॥ १४ ॥**

**येन लोभो येन मोहस्ते रजस्तमसी ॥ १५ ॥**

येन विज्ञानमिति । येन विस्पष्टं ज्ञानं यद्यथा वर्त्तते तस्य तथैव ग्रहणं कर्त्तव्यमिति निरन्तरदृढाभ्यासेनोत्तरोत्तरं वर्द्धते तत्सत्त्वम् । येनाक्रम्यमाणं सदाकारं विज्ञानं परिणमते विषयतादात्म्यं प्राप्नोति तत्सत्त्वम् ॥ १४ ॥

येन लोभ इति । स्फुरणस्यैव चाञ्चल्यमहिम्ना विषयस्य प्रतीयमानचाञ्चल्येन यथावत्परिचयविरहे स्वभावसिद्ध्या बहिर्मुखतया दोषे तिरोहिते गुणे च प्रत्यायिते लोभो वर्द्धते । तथा स्फुरणमालिन्यप्रयुक्तविषयेषदावरणेन गुणदोषान्यतरग्रहणविरहे प्रवृत्तिनिवृत्तिराहित्योपलक्षिता विषयाभिमुख्यवस्था मोहो वर्द्धते ॥१५॥

रजस्तमसोः समृद्धावनर्थं दर्शयति—

**रजस्तमोभ्यामभिभूतः संसरति ॥ १६ ॥**

रज इति । चाञ्चल्यमालिन्याभ्यामाक्रान्ते स्फुरणे जीवो जन्ममरणपरम्परामुपक्रमते ॥ १६ ॥

## सत्त्वेनोपशाम्यति प्रसीदति च ॥१७॥

सत्त्वेनेति । बहिर्मुखतयैव दुःखमुत्पद्यत इति सत आत्मनोऽन्यथाभावनानिवर्त्तनेन सत्त्वेनाविपरीतभावेनोपशाम्य(१+ति) स्फुरणमात्मभावं प्राप्नोति, न तु जीवभावम् । तथाऽऽत्मसुखाविर्भावेन प्रसीदति । स्पृहानिवर्त्तनेन सन्तुष्यति च ॥ १७ ॥

सत्त्वरजस्तमसामसि [१=वि]भक्तावस्थां निरूपयति--

## आत्मनः स्फुरण(? — णं)स्वभावो नित्यः प्रकृतिरित्याख्यायते ॥ १८ ॥

आत्मन इति । विद्वदनुभवैकविषयस्येदृशमिति निरूपयितुमशक्यतया वाचामगोचरस्यासज्जडदुःखविलक्षणत्वेन सच्चिदानन्दलक्षणस्य परप्रेमास्पदत्वेन परमानन्दस्वरूपस्यात्मनः स्फुरणं विषयीकरणं प्रकाशकत्वेनोज्जृम्भणं स्वभावः । स च प्रध्वंसप्रागभावयोरप्रतियोगित्वेन नित्यः। प्रकृतिरिति प्रकृत्याख्यया विद्वद्भिराख्यायते १८

## आत्मनः स्फुरणं प्रसिद्धविषयं करोति स्फुरणमन्तःकरणम् ॥ १९ ॥

स्फुरणमिति । प्रतिबिम्बग्राहिदर्पणविशेषेणेव चक्षुषा गृहीतप्रतिबिम्बानामत एव सन्निहितानां साक्षादिन्द्रियसम्बद्धानां

विषयाणां शरीरे तत्तदिन्द्रियावच्छेदेन विषयीकरणादन्तःकरणमिति तदाख्यायते । तथा बिम्बप्रतिबिम्बयोरभेदावभासेन विषयतायास्तत्तद्बिम्बावच्छेदेन च बहिरुपलब्ध्या बाह्यकरणत्वेन चक्षुरादीनीन्द्रियाण्याख्यायन्ते । चैतन्यं हि केवलमात्मनो धर्मो न त्विन्द्रियाणाम् ॥ १९ ॥

अन्तःकरणं चतुर्द्धा विभक्तं व्यवह्रियते । तत्र बुद्ध्यहंकारौ पूर्वं परिचायितौ । मनश्चित्ते परिचाययति--

## संस्कृतं तन्मनश्चित्ते ॥ २० ॥

संस्कृतमिति । प्रतिबिम्बग्राहिदर्पणविशेष इव केनापि संस्कृतमन्यतादात्म्यापन्नं तत् स्फुरणमात्मनश्चैतन्यं विशेषानवग्राहितया संशयनात्मकं मनः, अनुभूतसंस्कारोद्बोधनेन स्मरणात्मकं चित्तमाख्यायते ॥ २० ॥

प्रकृतेः प्रभावं दर्शयति—

## यदविरतं यथा भावयति प्रकृतिस्तदात्मानं तथा प्रापयति ॥ २१ ॥

यदविरतमिति । प्रकृतिर्येन निरन्तरं यद्भावयति, मनोराज्यमिव यद्विषयिणीं भावनां जनयति, आत्मनः स्फुरणं यदभिमुखं करोति, स्वभावेन स्फुरणं यदभिमुखं भवति, तेन प्रकारेण तद्भावितं वस्त्वन्तरत्वापन्नं सत् प्रकृतिरात्मानं प्रापयति ॥ २१ ॥

मानससृष्टिप्रकारं दर्शयति—

अहन्तास्पदं विस्मरन् यदुत्कटं भावयति तत्तदानीं मूर्त्तमिव पश्यति ॥ २२ ॥

अहन्तेति । अहन्ताया अहमित्याकारकप्रतीतिविषयताया अस्मच्छब्दवाच्यताया आस्पदमालम्बनं विस्मरन् अहन्ताविरहेण स्फुरन्नात्मा यत् उत्कटं तीव्रवेगसहकृतं भावयति तत् मनोराज्यभूतं तदानीं मूर्त्तमिव भौतिकसदृशं पश्यति ॥ २२ ॥

एवं प्रकृत्याऽऽत्मनः परमेश्वरतां निरूप्य बन्धमोक्षौ निरूपयति—

सा हि तं बध्नाति परिचिता मुञ्चति च ॥ २३ ॥

सा हीति । प्रकृतिरेवात्मानं रजस्तमोभ्यां बध्नाति, सत्त्वेन विज्ञानमहिम्ना परिचिता मुक्तं च करोति ॥ २३ ॥

बन्धप्रकारं दर्शयति—

सा हि संस्कृतं स्फुरणं पञ्चधा करोति ॥२४॥

सा हीति । सा हि बहुविधलीलाभिमुखी प्रकृतिरेव संस्कृतमितरतादात्म्येन मलिनं विषयतामापन्नम(?=मु-)त्तरक्षणास्थायि स्फुरणं चैतन्यं स्वमहिम्ना पञ्चधा मनोराज्यनानात्वमिव पञ्चभिर्विभक्तं करोति ॥ २४ ॥

कृतान्पञ्च भागान्परिचाययति—

त एव शब्दादयस्तदधिकरणान्याकाशादय-
स्तद्भोगसाधनं शरीरं च ।। २५ ।।

त एवेति । ते पञ्चधा विभक्ताः संस्कृताः स्फुरणभागा एव शब्दस्पर्शरूपरसगन्धा भवन्ति । तथा तदधिकरणत्वेन भाविता-स्तेषामधिकरणान्याकाशवायुतेजोजलभूमयो भवन्ति । तद्भोगसा-धनं स्थूलशरीरं च ।। २५ ।।

सूक्ष्मस्थूलशरीरोत्पत्तिनिरूपणमुपक्रमते—

ते प्रकृत्यैव परस्परं सङ्क्रम्य स्थूलतां
प्रतिपद्य विपरिणमन्ते ।। २६ ।।

ते प्रकृत्यैवेति । ते साधिकरणाः शब्दादयः प्रकृत्यैव स्वभा-वमहिम्नैव परस्परं संक्रम्य तादात्म्यमापद्य अत एव स्थूलतां प्रति-पद्य विपरिणमन्ते शनैः शनैराकृतिविपर्ययं प्राप्नुवन्ति ।। २६ ।।

सूक्ष्मशरीरं निरूपयति—

विपरिणतानां संहतास्तैजसा अवयवा आत्मनः
स्फुरणमाकर्षन्ति ।। २७ ।।

विपरिणतानामिति । विपरिणतानां शब्दादीनां संहताः पर-

स्परं मिलितास्तैजसा मालिन्यानाक्रान्तचैतन्यभागाः स्थूलभूतानामवयवा आत्मनः स्फुरणं विषयीकरणशक्तिमद्बाधिताधारचैतन्यम् आकर्षन्ति बिम्बाकाराकर्षणशक्तिमद्दर्पणविशेषवदागृह्णन्ति ॥२७॥

आत्मनो जीवत्वप्रयोजकोपाधिं प्रदर्श्य जीवान् परिचाययति—

तेन ते सूक्ष्मशरीरा जीवा भवन्ति ॥ २८ ॥

तेनेति । तेन विषयीकरणशक्तिमच्चैतन्यवत्त्वेन ते संहतास्तैजसावयवाः सूक्ष्मशरीराः, सूक्ष्मं विषयीकर्त्तुमशक्यं चक्षुरादिकरादिसर्वावयवासमवेतत्वेनात्यन्तस्थूलशरीरसदृशं(?) शरीरं येषां ते, विषयीकरणशक्तिमच्चैतन्यवन्तः शरीराकारास्तैजसावयवा जीवाः प्राणधारणाया प्राणिनो भवन्ति ॥ २८ ॥

सच्चिदानन्दलक्षणस्यात्मनो विस्मृतिं निरूपयति—

अहमहमित्यभिमन्यमाना भोगसाधनानि स्थूलशरीराणि परैरंशैः कल्पयन्ति ॥ २९ ॥

अहमहमिति । सूक्ष्मशरीरेऽहमहमित्यभिमानेन परमात्मानं विस्मृत्य यथापूर्वं बहिर्मुखताविलासवशेन ममतास्पदानि स्थूलशरीराणि संस्कृतस्फुरणमलि( +न )भागैर्भोगसाधनत्वेन ते कल्पयन्ति । यथा भौतिकैर्व्यापारैर्भौतिकं निर्मिणवन्ति, तथा मानसैर्व्यापारैर्मनोमयं रचयन्ति ॥ २९ ॥

संसारासमवायिकारणमुज्जृम्भितमात्मन्यहम्भावं सूक्ष्मेषु निरूप्य स्थूलेषु शरीरेषु निरूपयति—

स्थूलशरीरेष्वहमिति भावयन्तो मलिनाः कल्पनाशक्तिमुज्झन्ति ॥ ३० ॥

स्थूलशरीरेष्विति । चैतन्यानभिव्यञ्जकेषु मलिनेषु स्थूलशरीरेषु नानाविधेषु द्विपदचतुष्पदषट्पदबहुपदापदप्रभृतिषु अहमिति भावयन्तस्तादात्म्यमापन्ना अत एव मलिना जाड्यं प्राप्ताः कल्पनाशक्तिं संकल्पानां रूपरचनासामर्थ्यमुज्झन्ति त्यजन्ति । प्रकृतेर्विक्षेपशक्तिमत्सु सूक्ष्मशरीरेष्वहमिति भावयन्तो विक्षेपशक्त्याऽऽत्मनि नानाविधं मूर्त्तमिव कल्पयितुमीशते जीवाः । ते पुनरावरणशक्तिमत्सु स्थूलशरीरेष्वहमिति भावयन्तोऽत्यन्तपराङ्मुखा आवरणशक्त्या स्थूलशरीरेण वृताः स्थूलशरीरनिरपेक्षं किमपि साधयितुं न शक्नुवन्ति ॥ ३० ॥

विस्मृतिपरम्परामुद्बोधयति—

ततः परमिमानि कल्पकानि मन्दा न मन्यन्ते॥३१॥

ततः परमिति । प्रथमं प्रकृत्या विक्षेपशक्त्याऽऽत्मनो नानाविधत्वं दर्शयन्त्याऽऽवरणशक्त्या यथार्थस्वरूपमावृत्य निगृह्य परमेश्वरतोपरमुज्यते (१=-ऽपरज्यते,) ततः स्थूलशरीरतादात्म्याभिमानात् परमत्यन्तस्वरूपविस्मृतिदशोपलक्षितसमयमिमानि दृश्यमा-

नान्यनुभूयमानानि निरूपयितुमशक्यानि काल्पनिकान्यपि सर्वाणि मन्दा, उद्योगेनापि मालिन्यं निवर्त्तयितुमशक्ताः, काल्पनिकानि मनोराज्यानतिरिक्तानि न मन्यन्ते । किन्तु मनोराज्यव्यतिरेकेण भौतिकानि वस्तुसद्रूपाणि न मनोमात्रविलसितानीति मन्यन्ते ॥ ३१ ॥

स्वरूपविस्मृतिफलं दर्शयति—

## तेनैव काल्पनिकानि भूतानि वस्तुतां प्रतिपद्यन्ते ३२

तेनैवेति । स्वरूपात्यन्तविस्मरणेनैव कल्पनाशक्तिविधुराणां मनोराज्यानतिरिक्तान्यपि सकार्याण्याकाशादीनि तामसा गुरुत्वादिना व्यवस्थितभावमव्यभिचरितकल्पकार्यकारणभावं स्थैर्यं यथा कथञ्चिन्निरूपयितुं शक्यतां व्यवहारक्षमतां प्रतिपद्यन्ते प्राप्नुवन्ति ३२

प्रकृतमुपसंहरति—

## एवमाकृष्टात्मस्फुरणानि भूतानीषच्चैतन्यवतः कृमिविशेषान् जीवानुत्पादयन्ति ॥३३॥

एवमिति । परस्परं मिलितानामाकाशादीनां खण्डशो मिलितेषु तदवयवेषु कदाचित्कुत्रचित्संहतास्तैजसा अंशाः संहतिशक्तिसमृद्ध्याऽऽत्मनश्चैतन्यमाकृष्य परैरंशैः समं शनैः शनैर्विपरिणम्याणुतमचैतन्यवतो वासनाविधुरान् स्वसमवेतान् कृमिविशेषान् जीवानुत्पादयन्ति । ईदृशानुभववशेनैव केचित्पुनर्जन्मादिकं न मन्यन्ते ॥ ३३ ॥

उपसंहृतं पर्यवस्यति—

तेऽपि संसरन्तः कदाचिदमरत्वमुपयान्ति ॥३४॥

तेऽपीति । केवलं पाञ्चभौतिका निर्वासना अपि कृमिविशेषा जीवाः संसरन्तोऽहन्ताममताप्रभावेण वासनां सम्पादयन्तः कदाचित् वासनाक्रान्तचैतन्यत्वे स्थूलशरीरचरमावस्थोत्तरं वासनाक्रान्तचैतन्येऽहम्भावेन सूक्ष्मशरीरकल्पनया तन्मुक्तिपर्यवसायित्वेन नानाविधशरीरमुपलभमाना अमरत्वं मरणविरहमुपयान्ति प्राप्नुवन्ति ॥ ३४ ॥

अथ सत्त्वं वर्द्धनीयमिति ( २ । १३ ) सूत्रेणोपक्रान्तानि सत्त्वरजस्तमांसि स्वरूपेण लक्षयित्वा तेषामवयविभूता प्रकृतिः सामान्यलक्षणेन सप्रपञ्चं लक्षिता, इदानीं तथा तानि लक्षयति—

भूतानां तैजसोंऽशः सत्त्वं क्रियांशो रजो गुर्वंशस्तमो व्यवह्रियन्ते ॥ ३५ ॥

भूतानामिति । सशब्दाद्याकाशादीनां तैजसः संस्कारानाक्रान्तचैतन्यभागः अंशोऽवयवसत्त्वं सद्भावो विक्षेपावरणाभ्यामनाक्रान्तत्वेनानन्यथाभावनं विपर्ययानाक्रान्तं प्रमाजनकम् । क्रियाबहिर्मुखतया वासनापारतन्त्र्येण नानाविधविषयकल्पनावगाहनतत्परत्वेन नानाभावमापन्नो गुरुत्वानाक्रान्तचैतन्यभागोंऽशो रजः । गुरु अत्यन्तमालिन्येन जडीभूतं ज्ञानक्रियाशक्तिविधुरं स्थूलत-

मचैतन्यमंशस्तमः । व्यवह्रियन्ते प्रकृतव्यवहारविद्भिस्तेषु तेष्वर्थेषु सत्त्वरजस्तमांसि शब्दा अभिधीयन्ते ।। ३५ ।।

एवं त्रिधा चैतन्यमभिव्यञ्जयन्त्याः प्रकृतेरुपासनायाः पृथक् पृथक् फलं दर्शयति—

एवं जीवाः सत्त्वेन विज्ञानं रजसोद्योगं तमसा मोहं वर्द्धयन्तोऽमरमनुजदनुजादिषूपजायन्ते ॥३६॥

एवं जीवा इति । एवं यथा प्रकृतिस्त्रिविधा तथा सत्त्वेन यद्वस्तु यादृशं तत्त्वेन विज्ञानं विषयविशिष्टं प्रमात्मकं ज्ञानं, रजसा चैतन्याश्रितविषयरागेणोद्योगमुपरि शरीराद्बहिर्योगं सम्बन्धं विविधविषयसंसर्गमनेकविधव्यवसायं, तमसा तत्तद्विषयगुणदोषपरिचयतदनुरूपव्यवसायवैधुर्येण मोहं स्वरूपविपर्ययं वर्द्धयन्तो जीवा अमर मनुजदनुजादिषु मरणजननाद्यनेकदुःखानुसन्धानेन स्थूलशरीरानवाप्त्या कल्पनाशक्त्यलंकृतजीवा गर्भवासाद्यवस्थानापन्नेषु स्वयंकल्पितेष्वमरशरीरेषु, तथा विषयभोगानुरूपेषु मनुष्यशरीरेषु, ज्ञानक्रियाशक्तिविधुरेषु अजगरादिषु चोपजायन्ते ।। ३६ ।।

ज्ञानक्रियाशक्तिविध्वंसिषु दानवेषु सात्त्विकानां वैरल्यं दर्शयति—

एवं संसरन्तः केचिदेवाविरतं बहुभिः शरीरैः सत्त्वमेव संवर्द्धयन्ते ॥ ३७ ॥

एवं संसरन्त इति । एवमुक्तप्रकारकप्रकृतिपारतन्त्र्येण संसरन्तोऽनेकविधशरीराणि प्राप्नुवन्तः केचिदेव विरला एवाविरतं सन्ततं बहुभिः शरीरैः सत्त्वमेव रजस्तमसोराक्रमणेन संवर्द्धयन्ते सम्यक् यथोचिताहारविहारेण फलसमृद्ध्या वर्धयन्ते ॥ ३७ ॥

फलमुखेन सत्त्वसमृद्धिं पर्यवस्यति—

रजस्तमोऽभिभूत्या सत्त्वसमृद्ध्या पूर्णविज्ञानं सम्पद्यते ॥ ३८ ॥

रजस्तम इति । रजस्तमसोरभिभूत्या फलप्रतिबन्धेन सत्त्वसमृद्ध्या सत्त्व प्राधान्येन जीवानां निरन्तरस्थितया पूर्णविज्ञानं यावद्विषयकहिताहितविपर्ययज्ञानबाधया व्यामोहविधुरप्रवृत्तौ प्रकारताविशेष्यतोभयावगाहि विषयितासम्बन्धेन प्रकारताविशेष्यताश्रयविशिष्टं ज्ञानं सम्पद्यते यथावत्प्रमासामग्रीसम्पत्त्या सम्पन्नं भवति ॥ ३८ ॥

विज्ञानफलं दर्शयति—

तेन विवेक उत्पद्यते ॥ ३९ ॥

तेनेति । विज्ञानवन्तो हि प्रमाणेन प्रमितं लक्षणेन लक्षितमन्वयव्यतिरेकाभ्यां परीक्षितं विवेचयन्ति । सर्वेऽपि संस्कारा अभ्यासमहिम्नैव स्थायितां प्रतिपद्यन्ते ॥ ३९ ॥

राजसानां स्थितिं दर्शयति—

**अन्ये रजसा विज्ञानं विक्षिपन्तो विविधभोगानेव स्पृहयन्ति ॥४०॥**

अन्य इति । नानाविधेषु विषयेषु विषयितया विज्ञानं चञ्चलयन्तो विक्षेपमहिम्नाऽऽनन्दानुपलब्ध्या बहिर्मुखा विविधभोगानेव बुभुक्षिता भोज्यमिव सदा स्पृहयन्ति ॥ ४० ॥

तामसानां स्थितिं दर्शयति—

**इतरे तमसा विज्ञानमभिभूय मुह्यन्तो रजसा तिर्यगादिषु संसरन्तस्तमस्समृद्ध्या स्थावरा अपि भवन्ति ॥ ४१ ॥**

इतर इति । आत्मनस्त्रिगुणात्मिकायाः प्रकृतेरत्यन्तविलक्षणेनावरणशक्तिप्रधानेनामूर्त्तेनात एव तमसा विषयीकरणशक्तिप्रतिबन्धकेनान्धकारसदृशेन गुणभूतेन तृतीयांशेन विज्ञानमभिभूय विषयीकरणशक्तिप्रतिबन्धेन तिरस्कृत्य मुह्यन्तो जाड्यसमृद्ध्या स्वरूपं विकुर्वन्तो रजसा विक्षेपप्रधानेन द्वितीयांशेन भोगलिप्सया तिर्यगादिषु संसरन्तो मृतिजन्मपरम्परां प्राप्नुवन्तस्तमस्समृद्ध्या विज्ञानात्यन्तावरणेनेतरे स्थावरा वृक्षादयोऽपि भवन्ति ॥ ४१ ॥

प्रकृतेस्त्रयाणां सत्त्वरजस्तमसामंशानां पृथक्त्वेन प्रभावं दर्श-

यित्वा जीवानां प्रकृतिपारतन्त्र्यं दर्शयति—

प्रकृतिरेव रजसा सात्त्विकानुपर्युपरि नयन्ती तामसानधोऽधो नयति ॥ ४२ ॥

प्रकृतिरेवेति । अविभक्तावयवाऽविकृता प्रकृतिः कार्यविरहादव्यक्तम्, आत्मनो जगदुत्पत्तेः शक्तिः। कार्याण्येव शक्तिमभिव्यञ्जयन्तीति यादृशं कार्यं तदनुरूपा कर्त्तरि कल्प्यते शक्तिः। संसारेण किं फलं मम भविष्यतीत्यनालोचमानः फलमनुद्दिश्यैवाक्रीडनकमिति पर्यालोचमान आत्मा जगत्करोतीति प्रकृतिः। किञ्च यावदात्मा न विक्रियते, अन्यथा प्रतीयते, स्वप्रतिबिम्बसंस्कारवशेन न विकरोतीति यावत्, तावत्प्रकृतिर्व्यवह्रियते । अद्वितीय एव स्वाप्निकमिव नानाविधं जगज्जालं वितनोतीति भावनाऽप्युच्यते । वह्नेरौष्ण्यमिवौपचारिकं भेदमाश्रित्यात्मनः प्रकृतिरित्युच्यते । प्रतिबन्धकसमवहितो वह्निर्न दहतीति तत्र दहनशक्तिः कल्प्यते ।

एवं प्रकृतिरेव सर्वं करोत्यात्मानमुपकुर्वन्ती, नात्मेति, बहवो व्यवहरन्ति । तथा पुरुष इव प्रकृतिर्नित्येति कथयन्ति । अहमात्मा जीव इति मन्यमाना आत्मव्यतिरेकेण परमात्मानं कल्पयन्ति, तदधिष्ठितत्वेन जगत्कर्त्रीं प्रकृतिं निरूपयन्ति चेति ।

त्रिविधं जगदुपलभ्यत इति तत्कारणानि तस्यां सत्त्वरजस्तमांस्यवयवाः कल्प्यन्त इति । रजसा सात्त्विकानुपर्युपरि पूर्वपूर्वविज्ञानापेक्षयोत्तरोत्तराधिकविज्ञानसम्पादनयोग्यशरीराणि नयन्ती प्रा-

पयन्ती तामसानधोऽधः पूर्वपूर्वविज्ञानापेक्षयोत्तरोत्तरविज्ञाननिवर्त्तन-योग्यशरीराणि नयति प्रापयति । विज्ञानप्रधानव्यवसायिनां स्वभाव उत्तरोत्तरं विज्ञानसमृद्धये विज्ञानप्रधानव्यवसायिशरीरानुरागः, तथा विज्ञानविध्वंसप्रधानव्यवसायिनां स्वभाव उत्तरोत्तरं विज्ञानविध्वंसप्रधानव्यवसायिशरीरानुराग इति ॥ ४२ ॥

ईश्वरताप्रयोजकत्वेन सत्त्वं निरूपयति—

अथ ये विज्ञानेन मिथ्याज्ञानं निवर्त्य कल्पनाशक्तिमुद्भावयन्ति ते नवानपि जीवानुत्पादयन्ति ॥ ४३ ॥

अथेति । ये सत्त्वसमृद्धिफलभूतेन विज्ञानेन मिथ्याज्ञानमतस्मिंस्तज्ज्ञानं मिथ्याविषयकं ज्ञानं निवर्त्य रजस्तमःपारतन्त्र्यनिरासेन प्रतिबध्य कल्पनाशक्तिमूर्णनाभिरिवेतरानपेक्षं जगज्जालरचनासामर्थ्यमुद्भावयन्ति प्रतिबन्धकनिवृत्त्या वह्नेर्दहनशक्तिमिव कार्यक्षमां कुर्वन्ति ते नवानपि स्ववासनानुरूपान् जीवानुत्पादयन्ति ॥ ४३ ॥

जीवत्वप्रयोजकत्वेन रजस्तमसी निरूपयति—

ते पुनर्विकृतावेवाहमहमिति भावयन्तस्तथाभूताः प्रकृत्या संसार्यन्ते ॥ ४४ ॥

ते पुनरिति । ते अन्यवासनया सवासना नूतना जीवा भोगलिप्सया विकृतावेव परवासनामये सूक्ष्मशरीर एव, न तु प्रकृत्यधिष्ठातृचैतन्ये, अहमहमिति सूक्ष्मशरीरतादात्म्येन भावयन्तः शरीरिणमात्मानमाकलयन्तस्तथाभूतास्तमसा विकृतितादात्म्यमापन्नाः प्रकृत्या बहिर्मुखतास्वभावेन संसार्यन्ते स्थूलशरीरसंयोगवियोगवन्तः क्रियन्ते ।। ४४ ।।

नूतनत्वप्राचीनत्वप्रतीतिप्रयोजकपरस्परविलक्षणत्वं निवारयति—

## काल्पनिकानां भौतिका ( ?+नां ) च समानस्थितौ पर्यवसानम् ॥ ४५ ॥

काल्पनिकानामिति । मिथ्याज्ञाननिवृत्त्याऽऽत्मनि परप्रेमास्पदत्वभानेनात्मचैतन्ययोर्योगेन योगप्रतिबन्धकानां रागद्वेषादीनां फलप्रतिबन्धेन निवृत्तौ निर्मितानां काल्पनिकानां कल्पनामात्रोपादानकानां ( ?+भौतिकानां ) च जीवानां समानस्थितौ भेदप्रतीतिविरहस्थितौ पर्यवसानम् । यथा भौतिकानां जगदारम्भसमये काल्पनिकत्वं पश्चाद्भौतिकत्वम्, तथैतेषाम्, कल्पनाया एव भूतात्मना परिणतेः।।४५।।

ननु सर्वेऽपि पारलौकिकसुखार्थं प्रयत्नाः परलोके सति हि सङ्गच्छन्ते । न केऽपि तत्रत्या इहोपलभ्यन्ते । नापीहत्याः केऽपि परलोकं गच्छन्तः । नापि शरीरप्रध्वंसानन्तरमवशिष्यमाणम् । किञ्च कारणगुणाः कार्यगुणानारभन्त इति नियमस्य वटपादपेनोत्पादितं

निगूढस्वसमानाकृति बीजमङ्कुरत्वादिपरिणामसाधनसम्पत्त्या स्वाकृतिमभिव्यञ्जयत्येवं पुरुषेणोत्पादितं निगूढस्वसमानाकृति शुक्रं योनिशोणितादिसाधनसम्पत्त्या सचेतनत्वादिना परिणममानं स्वाकृतिमभिव्यञ्जयति, इत्येवं जडाज्जडं चेतनाच्चेतनं स्वसजातीयमेवोत्पद्यत इत्येवमुपलभ्यमानत्वेन जडबीजे जडत्ववच्चेतनबीजे तत्पुरुषीयचेतनत्वं सम्पद्यत इत्यत आह—

## विज्ञानतारतम्यं पूर्वशरीराणि सम्भावयति ।। ४६ ।।

विज्ञानेति । मातापितृभ्यां समानाकृतयो बहवो बालकाः । केचिन्मात्रा समानाकृतयः पित्रा केचिदुत्पद्यन्ते । तेषां शरीरेषु मातापित्रोर्यावन्तः शरीरधर्मा यावन्तश्च परस्परं सोदराणां तनयत्वसोदरत्वाभिव्यञ्जका उपलभ्यन्ते, न तथा चैतन्यधर्माः । अत्यन्तमूर्खयोरपि मातापित्रोर्महान्तः पण्डितास्तनयाः, महापण्डितयोरपि महामूर्खाः प्रख्यायन्ते ।

तथा बहूनां सोदराणामेकस्मादेवाचार्यवर्यादधीयमानानामेको दशकृत्वः परः पञ्चाशत्कृत्वः कोऽपि सप्ततिकृत्वोऽन्यः शतकृत्व एवाचार्याधिगततन्मन्त्रो भवति, इतरे सहस्रकृत्वोऽप्युच्चार्य विपर्ययाक्रान्ता उद्विजमाना धारणाशक्तिरहिता न यथावदधिगतमन्त्रा भवन्ति इत्येवं चैतन्यधर्मा अत्यन्ततारतम्यं निषेवन्ते ।

किञ्च कारणगुणा इति नियमस्य प्रकृतेः स्थूलशरीर एवोप-

लभ्यमानत्वेन चैतन्यपर्यन्तेऽन्वयो न संगच्छते। अपि च। यथा कोऽपि मेधावी सकृच्छ्रवणेन सर्वं श्रुतं यथावद् गृह्णाति, गृहीतं च बहुभिरुपपत्तिभिर्यथावलि(?न्नि)रूपयति, अश्रुतानि च बहूनि प्रतिभापयते। तथाऽत्यन्तमन्दबुद्धिरपि महता परिश्रमेण प्रयतमानः शनैः शनैः किञ्चित् किञ्चित्कथञ्चिदधीतमधिगच्छत्येव। तस्याधिगतमन्त्राणामेकैकशः शनैः शनैः पुनः पुनर्यथावद्ग्रहेण न तावान्प्रयासो भवतीति। एवं यथावदधिगताभ्यस्तायातयामानां मन्दबुद्धेरश्रुतानां कुशाग्रबुद्धेराचार्यवर्येभ्यः श्रूयमाणानां मन्त्राणां ग्रहेण तावपरिचिन्वतां परीक्षाविचक्षणानां साक्षिणामन्यतरस्य मान्द्यं मेधा च तत्तन्मन्त्रावच्छेदेन न प्रतिभासते।

अन्यच्च। तत्तद्विषयानुभवजननार्थं तत्तत्प्रमाणसामग्रीसम्पादने कियानायासः कथं च सङ्घटत इत्येवमालोच्य तत्तदनुभवजन्यसंस्कारोद्बोधने कियान्प्रयासः का च सामग्रीत्येवमालोच्यताम्। तथा चानुभवतारतम्यजन्यसंस्कारतारतम्यप्रयुक्तं विज्ञानस्य तारतम्यं न्यूनाधिकभावः पूर्वशरीराणि अविनाभावेन संभावयति पूर्वशरीराणि विनानुभवाऽनुपपत्त्या संस्कारविरहेणास्मिन् कलेवरे मेधाप्रतिभादयश्चैतन्यधर्मा न सङ्घटेरन्निति बोधयति। इहत्याभ्यासमात्रेण मेधाप्रतिभादिना जनयितुमशक्यत्वेन पर्याप्ताभ्याससाधनानि पूर्वशरीराणि निश्चाययति४६॥

शरीरान्तराश्रयत्वेन लोकान्तरस्यान्यत्वेन प्रतीयमानलोकस्य सिद्धौ मेधाप्रतिभाद्यसमवायिकारणपूर्वशरीरावच्छिन्नसंस्कारसिद्धेः प्रयोजकत्वेन तत्संस्कारस्य च तच्छरीरेण समं तत्पित्राद्यनुभवजन्य-

संस्कारस्यैव निवृत्तेरसमवायिकारणत्वानापत्तौ विज्ञानतारतम्यं पूर्वशरीराणि न सम्भावयेदित्यत आह—

## न हि विस्मृतानधीतयोः समाना स्थितिः ॥ ४७ ॥

नहीति । हि यतो विस्मृतानधीतयोः समाना स्थितिर्न भवत्यतः। विस्मृतोपस्थितौ संस्कारोद्बोधनस्य प्रयोजकत्वेनानधीतोपस्थितावभ्यासस्यैति तयोः स्थितावत्यन्तवैषम्यम् । अनधीतमन्त्राणां दृढतमसंस्कारजननपर्याप्तो विस्मृतमन्त्राणां संस्कारोद्बोधनपर्याप्तोऽभ्यासः । तथैकेनोद्बुद्धेन संस्कारेण तत्सम्बन्धिनो बहवः संस्कारा उद्बुध्यन्ते । बहूनां समानेनाप्यभ्यासेन कस्यचिदुद्बुद्धा नानाविधाः शरीरान्तरीयाभ्याससंस्कारा यन्नानाविधं विषयमुपस्थापयन्ति तत्प्रतिभोच्यते । पूर्वोपस्थितशरीरयोर्भेदो हि प्रतिभाप्रत्यभिज्ञानभेदप्रयोजकः । तत्तदनुभवजन्यसंस्काराणामुद्बोधने लौकिकालौकिकान्यतरसन्निकर्षजन्यविज्ञानविषयतत्तद्वस्तुसम्बन्धस्यैव हेतुत्वेन तत्तच्छरीरसम्बन्धित्वप्रकारकानुभवजन्यसंस्कारा नोपतिष्ठन्ते, तत्तच्छरीरप्रध्वंसात् । ये च तदानीन्तना अपि मनुष्यत्वादयः प्रकारा इदानीमुपलभ्यन्ते तैस्तदानीन्तनतत्प्रकारकानुभवजन्यसंस्कारा इदानीमुपस्थाप्यन्ते मनुष्यत्वाद्यन्यतमसामान्यलक्षणसन्निकर्षोपलब्धेः ॥ ४७ ॥

प्रतिशरीरं भिन्नानि बहूनि विज्ञानानि सन्ति । तेषां तारतम्यं पार्थिवविकाराणां शरावादीनामिव भेदप्रयोज्यमेवास्तु । भिन्नानां स्व-

भावभेदात्तस्यप्रभावेन प्रतिभाद्यश्चैतन्यधर्माः स्वाभाविका एव भवन्तित्यत आह

विविधविषयविषयीकरणमेव विज्ञानचमत्कृतिः ॥४८॥

विविधविषयेति विविधविषयाणां विषयीकरणमेव विज्ञानस्य चमत्कृतिर्वैचित्र्यं स्वभावः । विषयीकृतानां दृढतमसंस्कारजननपर्याप्तोऽनुभवाभ्यास इच्छया जन्यत्वान्न स्वभावः । तथा च दृढतमसंस्कारजननपर्याप्तानुभवाभ्यासप्रयोज्याः प्रतिभाद्यः स्वाभाविकत्वेन निरूपयितुं न शक्यन्ते ॥ ४८ ॥

स्मृतिविषयतां निरूपयति—

तत्तद्विषयप्रतिबिम्बसंस्कारा एव निमित्तमात्रेण स्वस्वविषयानभिमुखयन्ति ॥ ४९ ॥

तत्तद्विषयेति । यथा बिम्बाकृतिग्राहकदर्पणविशेषेण गृहीता संस्कारभूता बिम्बाकृतिः समयसमये स्वबिम्बमुपस्थापयत्येवं तत्तद्विषयपर्याप्तानुभवाभ्यासजनितप्रतिबिम्बसंस्कारा एव निमित्ततामात्रेण स्वस्वविषयानभिमुखयन्ति । बिम्बप्रतिबिम्बयोर्भेदं तिरस्कृत्याभेदेन बोधयन्ति । प्राक्तनैहिकसंस्कारनिमित्तशरीरभेदो हि स्मृतिप्रतिभयोर्भेदप्रयोजकः ॥ ४९ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यवर्यश्रीमत्पण्डितानन्तराममिश्रान्तेवासिना विरचितं मध्यमाधिकारोपेन्द्रविज्ञानसूत्रभाष्यम् ॥

एवं मध्यमाधिकारे मध्यमाधिकारिण उपदिष्टाः। कनिष्ठाधिकारिण उपदिश्यन्ते । तत्रात्यन्तबहिर्मुखाणां बहिरीश्वरतानुपलब्ध्या निरीश्वरत्वादिनामाप्तवाक्यश्रवणेन तत्र सन्दिहानानामत्यन्तमुद्विजमानानां विक्षेपप्रशान्त्युपायोपासनायै परमैश्वर्यं निरूपयति—

संस्कृतस्फुरणपञ्चधाकरणप्रकृत्यो-
पलक्षित आत्मेश्वरः ॥१॥

संस्कृतेति । यावन्त उत्कृष्टाः सर्वज्ञत्वजनकत्वनियन्तृत्वादयो गुणाः सर्वान् गुणानतिक्रामन्ति त एव परमैश्वर्यम् । तस्य च जगत्कर्तर्येवावश्यंभावेन तत्कर्तृत्वस्य चात्मनि निरूपितत्वेनात्मा हि परमेश्वरो यच्चैतन्यवन्तो भौतिकास्तैजसावयवा जीवत्वमभ्युपगच्छन्तो बहिर्मुखतया संसरन्ति ।

तेषु च यस्य बहिर्मुखताप्रतिबन्धेन सत्त्वसमृद्ध्याऽऽत्मतादात्म्यमुपतिष्ठते सोऽध्यात्मयोगपरिपाकनिवर्त्तिताशेषरागादिदोषपारतन्त्र्य आत्मभूतो यथापूर्वं कल्पनाशक्त्या परमैश्वर्यमाप्नोति । तथाऽऽप्तवाक्यश्रवणेन स श्रद्दधानान्मातरमिव पितरमिव प्रियतमं रक्षितारं सर्वशक्तिमन्तं दयावशंवदं सर्वज्ञं सर्वसाक्षिणं विभुं परमेश्वरं भावयतो मनसा वाचा कायेन निष्कपटमाराधयतो जीवानुपकरोति च । न तस्य जीवानु (?=नाप्तु) पकारे कर्मपारतन्त्र्यं येन जीवकर्मानुरोधेनैव तानुपकुर्यादपकुर्याद्वेति । किन्तु स्वभावः । स्वभावपारतन्त्र्यं सोऽपि नोपेक्षितुं क्षमते । अत एव प्रकृतिरेव सर्वं करोतीति व्यवस्थीयते । एवं

परमेश्वरोपासका ध्येयतादात्म्यमाप्नुवन्तो जीवताहान्या भेदं निरस्यैकतां प्राप्नुवन्ति ।

किञ्च स एवात्मा जगदुत्पत्त्योपलक्षितो हिरण्यगर्भो जगत्पतिरिति, जगत्स्थित्योपलक्षितो विष्णुर्जगत्पतिरिति, जगत्प्रशमनोपलक्षितो महेश्वरो जगत्पतिरिति त्रिधाऽऽख्यायते, भावनयोद्भावितो मनोरथं च पूरयति, भक्त्या भौतिको भूत्वा पुरस्तात् सम्प्रकाशते च ॥ १ ॥

प्रकृतिमनुल्लिख्यात्मनो जगत्कर्तृत्वं निरूपयति—

**स्वभावतः स्फुरतो विविधं मनोराज्यमिव कल्पयतः कोऽपि सङ्कल्पः स्थायितां प्रतिपद्यते ॥ २ ॥**

स्वभावत इति । शिखासन्तत्या समिन्धानस्य वह्नेरिव स्वभावतो निमित्तमनपेक्ष्य स्फुरतः सन्ततमविच्छिन्नधारं चेततो मनोराज्यमिव भौतिकसदृशमनोमयमिव विविधं विज्ञातृत्वविज्ञानत्वविज्ञेयत्वभिदया नानाविधं परस्परविलक्षणं विषयविषयिभावेन कल्पयतः स्वं मूर्त्तभावं प्रापयत आत्मनः कोऽपि निरूपयितुमशक्यः सङ्कल्पः स्थायितां प्रतिपद्यते ॥ २ ॥

इतः परं निरूपितं प्रकृतेर्जगत्कर्तृत्वमुद्बोधयति—

**तमेव नानाविधं भोक्तृभोगभोग्यात्मना प्रकृतिः प्रदर्शयति ॥ ३ ॥**

तमेवेति । तमेव स्थायितां प्रतिपन्नं सङ्कल्पमेव भोक्तृभोगभोग्यात्मना । सुखदुःखान्यतरवान्भोक्ता, सुखदुःखान्यतरसाक्षात्कारो भोगः, सुखदुःखान्यतरसाक्षात्कारहेतुर्भोग्यमिति त्रिधाऽऽकृत्य नानाविधं परस्परविलक्षणमसंख्यातं प्रकृतिः दर्शयति ॥ ३ ॥

प्रकृतमुपस्थापयति—

**तमात्मानमेव बहिर्मुखतया त्रिनेत्रचतुर्भुजपञ्चवक्त्रादिविविधवेषेण भावयन्त उपासते ॥ ४ ॥**

तमात्मानमिति । महेश्वरप्रभृतीनां योगीश्वराणामीश्वरतादात्म्यमापन्नानां सर्वशक्तिमतां विदेहानामहम्भूतानामात्मानमात्मत्वेन साक्षात्कृतं तमेव परमेश्वरमेव त्रिनेत्रचतुर्भुजपञ्चवक्त्रादिविविधवेषेण केचिन्महेश्वरवेषेण केचिन्माधववेषेण केचित्प्रजापतिवेषेण केचित्कात्यायनीवेषेणेत्येवं नानाविधवेषेण भावयन्त उपासते । स्वस्मिँस्तत्सेवकत्वं भावयन्ते । तत्प्रसादानुकूलं चेष्टन्ते ॥ ४ ॥

उपासनाफलं प्रकृतिपरतन्त्रयति—

**यादृशमुपासते तादृशादेव तदभीष्टं साधयति सा ॥५॥**

यादृशमिति । यादृश्या भावनया भावितं परमेश्वरभूतमात्मानमुपासते तादृशादेव महेश्वराद्यन्यतमस्वरूपात्परमैश्वर्ययुक्तादात्मनः सकाशादुपासकोपासनोद्देश्यमभीष्टं प्रकृतिः साधयति । साधनानि सम्पाद्य सम्प्रापयति । नानाविधान् गुणानाकृतीश्च

परस्परविलक्षणा उपासनार्थमात्मनः श्रुतयो निरूपयन्ति । तत्र यस्य यत्रानुराग उत्पद्यते स तादृशमात्मानमाराधयते ॥ ५ ॥

सात्त्विकोपास्योपासकोपासना दर्शयति—

**तेषु विज्ञानवन्तो विवेकिन उपशान्ता विज्ञानविवेकविराग(?+नि)लयं दयालुवर्यमुपशान्तं त्रिनेत्रं चतुर्भुजं पञ्चवक्त्रं महेश्वरं स्वाभीष्टप्रदत्वेनोपासते ॥ ६ ॥**

तेष्विति । पिपासुर्जलं बुभुक्षुरन्नं कामी कामिनीं शिशयिषुः शय्यां यथा कामयते तदनुरूपमुपयुङ्क्ते चैवं विजिज्ञासुर्विज्ञानं विविविक्षुर्विवेकं विरिरङ्क्षुर्विरागमित्येवं कामयमानाः स्वाभीष्टप्रदानं च तादृशादेव दातुराशासाना महर्षिभ्यस्तत्प्रदातृत्वेन श्रुतं महेश्वरमुपासते । तस्मिन्नेव सात्त्विकगुणानां प्राचुर्यश्रुतेः ॥ ६ ॥

ये च विषयचमत्कृतिविलासेनेन्द्रियाणि सन्तर्पयन्तो भोगसाधनान्याकलयन्तो विषयबीभत्सतोपलब्धौ न क्षमन्ते, तथा निखिलगुणदोषाधिष्ठानभूतं(?) प्रियतमं सच्चिदानन्दलक्षणमात्मानं सर्वसम्पत्समृद्धये न जिज्ञासन्ते, तेषामुपाधिकलुषे(?) स्वरूपतो विशुद्धे परमेश्वरे चित्तस्थैर्यविरहेण भावनाप्रतिबन्धे विषयोपासनयैवोपासनामुपदिशति—

**केचिन्मुकुटमणिमण्डितशेखरं शङ्खचक्रगदा-**

धरं पीतवसनं लक्ष्मीपतिमुपासते ॥ ७ ॥

केचिदिति । विषयानुरागपरतन्त्रा विषयचमत्कृतिभावनापुरस्सरमेव वैषयिकसुखसाधनावधित्वेनात्मानमुपासते ॥ ७ ॥

उक्तमुपसंहरन्नुपासनायास्त्रैविध्यं दर्शयति—

एवं सात्त्विकाः सात्त्विकं राजसा राजसं तामसास्तामसं तमात्मानमेवोपासते ॥ ८ ॥

एवमिति । ये यथा वर्त्तन्ते तेषां तथा विज्ञानवन्तो यो यथा वर्त्तते तं तथाभूतमेवोपासते । सेयं सात्त्विकोपासना । ये यथा वर्त्तन्ते तेषां तथा विज्ञानमपह्नुवाना यो यथा वर्त्तते तमन्यथाभूतमेवोपासते । सेयं राजसोपासना । ये यथा वर्त्तन्ते तेषां तथाभूत उपतिष्ठमानेऽपि विज्ञाने बलादन्यथा भावयन्तो यो यथा वर्त्तते तस्य तथाभूतमुपतिष्ठमानमपि विज्ञानं बलादन्यथैवाभ्युपेत्याऽऽग्रहपारतन्त्र्येणान्यथाभूतमेवोपासते । सेयं तामसोपासना । विज्ञानानुरूपं सात्त्विकाः, अर्थानुरूपं राजसाः, आग्रहानुरूपं तामसा व्यवहरन्ते ॥ ८ ॥

उपासनाफलप्रदातृत्वं प्रकृतेर्निरूपयति—

प्रकृतिरुपासकानामन्तरुपास्यगुणानभिव्यञ्जयति ॥ ९ ॥

प्रकृतिरिति । यथा यथाऽऽत्मानं भावयते भावनापरिपाके

तथाभूतमात्मानमुपलभते । उपलब्ध्यहङ्कारमहिम्नोपास्योपासकौ पृथगवभासेते । अहन्ताविषयतयोरभेदाध्यवसाये महेश्वरत्वेन भावितो महेश्वरो भवति, राक्षसत्वेन भावितो राक्षसो भवति । अहन्तासामानाधिकरण्येन भावनोपासना भवति । यदाऽऽत्मनोऽन्यत्राहन्ताया अत्यन्तनिवृत्तिर्भवति, यदा च निरन्तरायमहन्ताऽऽत्मानं व्याप्नोति, तदा निखिलात्मधर्मोपलब्ध्या महेश्वरो भवति । सर्वं कर्त्तुं विज्ञातुं च सर्वं शक्नोति ॥ ९ ॥

प्रकृतेः साक्षात्कारप्रयोजकत्वं दर्शयति—

चिरं सत्कारपूर्वकोपासनया सा ह्युपास्यं साक्षात्कारयति ॥ १० ॥

चिरमिति । प्रकृतिरेवोपास्योपासकयोरपरोक्षीभवनमपरोक्षीकरणं सम्पादयति ॥ १० ॥

प्रकृतिरेव प्रकृतिं निगृह्णातीत्याह—

तीव्रोपासनया सा सत्त्वरजस्तमसामितरे शीघ्रमेवान्तर्दधाति ॥ ११ ॥

तीव्रेति । संशयविपर्ययादिप्रतिवन्धकनिवृत्त्या विवेकवैराग्यादिसाधनसम्पत्त्या निरन्तराबाधितोपास्यभाव(? + न)या स्वसमृद्ध्या सत्त्वात्मिका प्रकृती राजसीं तामसीं च सत्वरं सत्त्वेनावृणोति । संशयविपर्ययादिफलपराङ्मुखतानिवर्त्तकाभिलषितविषया शक्त्याऽभि-

लषितविषयानुरूपविवेकवैराग्यादिसाधनसम्पत्त्या निरन्तराबाधितोपास्यभावनया स्वसमृद्ध्या राजसी प्रकृतिः सात्त्विकीं तामसीं च सत्वरं रजसाऽऽश्रयति । संशयविपर्ययाद्यपह्नवेनाग्रहानुरूपविवेकवैराग्यादिसाधनसम्पत्त्या निरन्तराबाधितोपास्यभावनया स्वसमृद्ध्या तामसी प्रकृतिः सात्त्विकीं राजसीं च तमसा विलीनयति ॥ ११ ॥

यावन्न परिचीयते प्रकृतिर्न तावन्निवर्त्तते विक्षेप इत्याह—

**यावन्न परिचीयते सा तावद्विविधवेषेण भावयन्तो देवयक्षभूतपिशाचादीनोपासते ॥ १२ ॥**

यावदिति। यः प्रकृतिं परिचिनोति स एव प्रतिक्षणं परिणामिन्याः प्रकृतेरात्मानुकूलं परिणामं विवेकबलेन सम्पादयति । ये खलु न तां परिचिन्वन्ति ते विषयासक्तिविक्षिप्तहृदयाः सन्तोषविरहेण पूर्वपूर्वोपास्यं विजहत आशापाशबद्धास्तत्तदुपास्यकोपफलमुपलभमाना उत्तरोत्तरमन्यमुपासते । तेषु ये निष्काममुपासते ते तु पूर्वपूर्वमुपास्यमुज्झन्तो विवेकसमृद्ध्या नवं नवमुपासीनास्तत्तदुपास्यमकोपयन्तः कल्याणपदवीं प्रपद्यन्ते ॥ १२ ॥

सात्त्विकोपासनायाः संसारप्रतिकूलतां सूचयन् राजसतामसोपासनायास्तदनुकूलतां दर्शयति—

**राजसतामसोपासनया प्रमोदते संसारः ॥ १३ ॥**

राजसेति । बहिरिन्द्रियप्रमोदानुरूपरूपादिसमलङ्कृतोपासनया बहिरिन्द्रियक्षोभानुरूपरूपादिबीभत्सोपासनया संसार आत्मनोऽहम्पूर्विका स्थितिः प्रमोदत्ते उत्तरोत्तरं विषयानुरागस्य दुराग्रहस्य च समृद्धिसम्भावनया निजकलङ्कोद्घाटनशङ्कानिवृत्त्या जन्ममरणपरम्परावश्यम्भावेन सुरापानपरकीयालिङ्गनादिदुराचारैः शरीरिणामवश्यम्भाविमृत्योरत्यन्तविस्मरणेन विवेकवैराग्यादिरिपुगाथानिवृत्त्या पूर्णाशक्ताऽऽत्मानमाक्रम्योज्जृम्भते ॥ १३ ॥

तामसोपासनामभिव्यञ्जयति—

## तान्त्रिकोपासनया हा विज्ञानं विप्लवन्ते ॥ १४ ॥

तान्त्रिकेति । नानाविधानामधिकारिणामुपलब्ध्या नानाविधा महतामुपदेशा महद्भिः संगृहीता उपलभ्यन्ते । तेषां यावत्तु यस्य दोषा न प्रतिभासन्ते तावदुपदेशानां दोषप्रतिभासविरहदशायां सोऽधिकारी परेऽनधिकारिणः, दोषप्रतिभासदशायान्तु सोऽपि । यावत्स्वयं गुणा दोषाश्च न परिचीयन्ते तावदेवापरोपदेशैराक्रम्यते । ये खलु गुणान् दोषांश्च परिचिन्वते, ते तु गुणदोषविमिश्रितेभ्यो वेदादिमहदुपदेशेभ्यो हंसाः क्षीरमिव गुणानेव गृह्णन्ति । दोषप्रियेभ्योऽपि गुणान् समर्पयितुमुपदेशा महद्भिः सर्वेऽपि सङ्करिता (?) । ये चात्मानमुपकुर्वन्ति त एव गुणाः, ये चापकुर्वन्ति त एव दोषाः । द्विजातीनान्तु वेदार्थमेव बाल्ये परिहितानि यज्ञसूत्राणि प्रतिक्षणं वेदायास्थापयन्ति । तेषां वेदेषु यावद् गुणाः प्रतिभासन्ते तावन्न

तैर्वेदविरुद्धमाचरणीयम् । वेदानुरूपमाचरणन्तु मनुव्यासयाज्ञवल्क्यादिमहर्षिभिर्निरूपितमेव ॥ १४ ॥

विज्ञानविप्लवं दर्शयति—

## अखाद्यं खादन्त्यपेयं पिबन्त्यस्पृश्यमुपभुञ्जते ॥१५॥

अखाद्यमिति । श्रोत्रियायातिथये गामालभन्ते, रूद्रं पशुना यजन्ते, सौत्रामण्यां सुरां पिबन्तीत्येवं बहुत्र वैदिकैरेव हिंसादिभिः सुकृतं निरूपयन्तः तान्त्रिकेषु सुरापानमांसभक्षणविधवालिङ्गनादिषु दोषं निरूपयन्तीत्येवं वैदिकानाक्षिपन्तः, श्रुतितन्त्रयोर्भगवत्प्रणीतत्वेन भगवत्प्रामाण्यस्योभयत्र साम्येनैव निर्विशेषत्वाद्वेदानिव तन्त्राणि प्रमाणयन्तः, वैदिकहिंसादिसामग्रीसम्पादनस्यात्यन्तदुर्घटत्वेन कादाचित्कत्वेन तान्त्रिकरीत्या तु तदपेक्षयाऽत्यन्तसुलभत्वेन पारलौकिकानन्दं निरूपयन्तः, वैदिकानुपहसन्तः, जगदम्बामुपासीना इव विधवामालिङ्गन्तः, सुरां पिबन्तः, मांसान्यदन्तः, विषयासक्तिकुण्ठितप्रतिभया गुणान्निरूपयन्तस्तान्त्रिकाः परमानन्दमनुभवन्ति ॥१५॥

निखिलकल्याणमूलमाचार्यसमागमं सो(?=सा- ०rशो )धयति—

## नाचार्यैर्वञ्चितेन भवितव्यं किन्तु विज्ञाततत्त्वेन ॥१६॥

नाचार्यैरिति । इदं कार्यमिदमकार्यमित्याचार्योपदेशेन रागान्धेनाग्राहाक्रान्तेन वा न शिष्येण भवितव्यम्, किन्तु कार्यत्वाकार्यत्वहेतुविज्ञानिना भवितव्यम् । ततः स्वयमेव तावद्यहसि महता प्रयत्नेन

आचार्योक्तहेतौ हेतुतावच्छेदकानुसन्धानपूर्वकं हेत्वाभासभयाद्व्यभिचारशङ्काऽऽलोचनीया । ततो हेतुदोषानुपलब्धौ परैरपि बहुत्र निर्णयार्थं महान्प्रयत्नः कर्तव्यः । न तावदाचार्योपदेशेन स्वदेशसजातीयकुलसदाचारान्परित्यज्य तदाचार्यसमानवेषाचारेण भवितव्यम् ॥१६॥

परिशेषविधया वञ्चनां परिचाययति—

न सा श्रद्धा या न जीवति सत्येन ॥ १७ ॥

न सेति । या सत्यसमागमं न सहते, सत्यं निरीक्ष्य दूरात्पलायते, न सा श्रद्धा, अपि तु वञ्चकस्य वञ्चितस्य च वञ्चना ॥१७॥

वञ्चनां तिरस्कुर्वन्नाचार्योपदेशमनुकूलयति--

आचार्य्येभ्यः सर्वं तत्त्वं विज्ञायैव विज्ञाततत्त्वानुरूपं चेष्टितव्यम् ॥ १८ ॥

आचार्य्येभ्य इति । श्रोत्रियेषु तावन्मीमांसकाद्धर्मं नैयायिकात् प्रमाणलक्षणानि योगिनो योगं ब्रह्मनिष्ठाद् ब्रह्मनिष्ठां तथा बौद्धजैनयवनप्रभृतीनां च निष्ठामित्येवं सर्वं तत्त्वं विज्ञायैव विविधतर्कैः संशोध्य यथावदधिगत्यैव विज्ञाततत्त्वानुरूपं यादृशं तत्त्वं तादृशं यदबाधितप्रकारताविशेष्यतावगाहि विज्ञानं तदनुरूपं चेष्टितव्यं कायेन वर्तितव्यम् ॥ १८ ॥

अन्यथाकृतौ दोषं दर्शयति—

अज्ञानपूर्वं कृतारम्भा हताधिकाराः पश्चात्तपन्ति॥१६॥

अज्ञानपूर्वमिति । गृहेषु निवसन्तो गृहदोषानाकलयन्तो गृहपरित्यागेन सुखमाशासते । बलाद् गृहेभ्यो निर्गत्य तु नवं नवं बहिर्दुःसहं क्लेशमनुभवन्तो गृहसुखमनुसन्दधानाः पुनरागन्तुमशक्नुवन्तः पश्चात्तपन्तीति यत्र यत्राभिलाषस्तं तं यथावत्परिचित्यानुकूलतामधिगम्यैव यथा पश्चात्तापो न भवेत्तथोपस्थितपरित्यागः कर्त्तव्यः ॥१६॥

सन्न्यासाधिकारमप्राप्य गृहभारभारासहनोद्वेगविक्षिप्तबुद्ध्या कृते मस्करित्वे सामान्यमुद्रया प्रायश्चित्तमुपदिशति—

अज्ञानपूर्वं कृतकर्मणामनर्थकारिणां समेषां
प्रायश्चित्तेन शुद्धिः कार्या ॥ २० ॥

अज्ञानपूर्वमिति । आश्रमचतुष्टयाधिकारिणा ब्रह्मचारिणा हि यथावत्साङ्गवेदाध्ययनानन्तरमार्यभाषोपनिबद्धान् म्लेच्छभाषोपनिबद्धांश्च सिद्धान्तानधिगत्य चतुरोऽप्याश्रमान्यथावत्परिचित्यैतद्विज्ञानानुरूपं यत्र येन वर्त्तितुं शक्यं तत्र तेन वर्तनीयम् । सर्वेषामनर्थकारिणामनर्थप्रतिबन्धकेन प्रायश्चित्तेन शुद्धिरनर्थराहित्यं कार्या किं पुनरज्ञानपूर्वं कृतकर्मणां शिखायज्ञोपवीतपरित्यागाद्यात्मनाम्॥२०॥

सन्न्यस्य पुनर्गार्हस्थ्ये गृहीते विद्वत्प्रतिष्ठा प्रतिहन्येतेत्याशङ्क्याह–

मांसपिण्डप्रतिष्ठार्थमात्मप्रतिष्ठा न संहननीया ॥२१॥

मांसपिण्डेति। प्रतिष्ठया समं विनाशमभिमुखस्य मांसपिण्डस्य मांसोपलक्षितसौन्दर्यस्य करचरणादिमतो देहस्य प्रतिष्ठार्थमात्मनोऽहम्प्रत्ययगोच(१+रस्य)प्रतिष्ठा यावच्छरीरेषु नियन्तृत्वेन सार्वदिकी स्थितिः न संहननीया देहाभिमानोपासनया परिच्छेदनीया॥२१॥

तर्हि धर्मशास्त्राणि विरुध्यन्त इत्याशङ्कां परिहरति––

सर्वतोऽर्थप्रतीघाते पुनर्गृहीतः पूर्वाश्रमः श्रेयान्॥२२॥

सर्वत इति । उद्वेगनिवृत्तौ वैराग्यविरहेण महामोहमहिम्नोज्जृम्भमाणासु नानाविधकामनास्वत्यन्तविक्षेपेऽर्थप्रतीघातेऽर्थस्योपस्थिताश्रमेण सिषाधयिषितस्य प्रतीघाते प्रतिबन्धकप्राचुर्येण साधयितुमशक्तौ पुनर्गृहीतः ब्रह्मचर्यानन्तरं यथा तथा ब्रह्मचर्यवच्छिखासूत्रधारणया गृहीतवेषः पूर्वाश्रमः श्रेयान् । आत्मनस्तदनुरूपत्वादितरविरूपत्वाच्च । न त्वाग्रहमहिम्नोपस्थितो मांसपिण्डाश्रिताश्रमः ॥२२॥

अन्धपरम्परानुगतचिरन्तनाश्रमभ्रान्तिं निवारयन्नाश्रमं लक्षयति–

यो नात्मानमतिक्रामति स आश्रमः ॥ २३ ॥

यो नेति । वेदाध्ययनपराङ्मुखस्य सन्ध्योपासनाविरहिणो यज्ञोपवीतादिद्विजातिचिह्ने ब्रह्मचर्याश्रमभ्रमः, आश्रमान्तरवर्त्तिरक्षणप-

राङ्मुखस्य परार्थमघटमानस्य दारगेहादिसम्पत्तौ द्वितीयाश्रमभ्रमः, भोगकामनयाऽन्तरत्यन्तविक्षिप्तस्य वनस्थितौ तृतीयाश्रमभ्रमः, अन्तरत्यन्तमनुरक्तस्य बहिर्विरक्तमुद्रस्य यतिवेषे चतुर्थाश्रमभ्रमः । आत्मस्थितिपरिचायिका देहस्थितिराश्रमः । अन्यथा हि स्थितिर्दम्भः ॥ २३ ॥

आश्रमसामान्यं लक्षयित्वा तद्विशेषं लक्षयन् ब्रह्मचर्यं लक्षयति—

अध्ययनानुरूपं वर्त्तनं ब्रह्मचर्यम् ॥ २४ ॥

अध्ययनेति । शिरःकरकटिचरणनियमनेन कायपीडनम्, वाचा कण्ठकपालशोषणम्, तत्तद्विषयसंस्कारपर्याप्ताभ्यासपटलेनात्मनः संस्करणमिति कायिकवाचिकाध्यात्मिकभेदेन त्रिधा भवत्यध्ययनम् । तदनुरूपं वर्त्तनन्तु व्यायामविशेषैः कायशक्तिसम्पादनम् । तदर्थं स्निग्धपर्याप्ताहारेण भवितव्यम् । तथा सति दुःसङ्गादिनिवृत्त्या सत्सङ्गादिसमृद्ध्या शुक्रं संरक्षणीयम् । अन्यथा नीरसे शरीरे व्यायामात्क्षमे व्याधिभिराधिभिश्च विक्रियमाणोऽध्ययनं प्रतिबध्येत । इत्येवं कायेन वाचाऽऽत्मना चाध्ययनानुरूपं वर्तनं ब्रह्मचर्यं प्रथम आश्रमः । स खलु द्विजत्वसम्पादकवेदाध्ययनानुरूपो द्विजत्वपरिचायकेन यज्ञोपवीतादिनोपलक्ष्यते । यथा नाम्ना व्यवह्रियमाणः पुरुषः सुखेन व्यवहारपदवीं प्रतिपद्यते, यथा यज्ञोपवीतादिनोपलक्ष्यमाणो द्विजत्वं स्वानुरूपव्यवहारपदवीं प्रतिपद्यते ॥ २४ ॥

क्रमोपस्थापितं द्वितीयाश्रमं लक्षयति--

सर्वेषां भारसहिष्णुत्वोपकर्तृत्वादिनाऽर्थधर्मकाम-
मोक्षाणां मूलं गार्हस्थ्यम् ॥ २५ ॥

सर्वेषामिति । सर्वे प्राणिनो गृहस्थमेवाश्रयन्तो जीवन्तीत्यनन्यगतिकानां तेषां दारसुतादय इव मदाश्रिता इम इत्येवं सार्वदिकदयानुसन्धानभारसहनशीलतया यथाशक्ति संरक्षणादिना चार्थधर्मकाममोक्षाणामध्यापनशासनक्रीतविक्रयादिभिर्यथोचितव्यापारैरर्थानाम्, सदुपदेशसंरक्षणासमयानुकूलवस्तुप्रा( १+प )णादिभिः सर्वेषां स्वास्थ्यसम्पादनेन धर्माणाम्, दारदहनोपासनमहिम्ना कामानाम्, तत्र तत्र बहुत्र निखिलशरीरतत्तद्भारसमर्पणेन निरुद्वेगस्थित्या मोक्षाणां मूलं गार्हस्थ्यम् ॥ २५ ॥

ब्रह्मचर्यगार्हस्थ्यसम्पादितसुकृतविशेषफलप्रतिबन्धकभोगासक्तिनिवर्त्तकं क्रमोपस्थितमाश्रमं लक्षयति—

निखिलकषायक्षपणयाऽऽत्मनो विमलीकरणार्थं
तितिक्षा तापस्यम् ॥ २६ ॥

निखिलेति । यावन्तो हि विवेकपरिपन्थिनो मोहादय इच्छापरिणामविशेषास्तेषामनादरो हि मुख्यो विवेकादरः । अनादरो नाम प्रकृति(१=प्रति)कूलवर्त्तनम् । तच्च तत्सुहृत्समाजेषु विधीयमानमात्मानमेव कर्त्तुर्विषादयेदिति मोहादिसुहृद्भ्यः पृथक् स्थितावेव मोहा-

दिप्रकृति(?=प्रति)कूलवर्त्तनं सुघटेतेति ब्रह्मचर्येणोपार्जितविज्ञानो गार्हस्थ्येन कृततदनुरूपानुष्ठानो विवेकमुपकुर्वन्नवश्यं दुर्गमेऽरण्ये वसेत् । तत्र विवेकानुरूपवर्त्तनं धैर्यमुपकरोतीति धैर्यसमृद्धये यथाशक्ति परमादरेण तितिक्षोपासनीया । सा हि प्रसादिता धैर्यं प्रसादयेत् । तदेव प्रसादितं विवेकं परिपोषयेत् । परिपोषितो हि विवेकः परिपन्थिनो विजयेत । विजिता हि परतन्त्रीकृता राजानः सपरिवारा निवर्त्तन्त इत्येवं तितिक्षा शीतोष्णादिद्वन्द्वसहनं वनस्थस्यात्मानं विमलीकरोतीति साऽप्यात्मनो विश्राममूमिरित्याश्रमः ॥ २६ ॥

एवं विज्ञानविवेकसमृद्धस्तितिक्षुः, प्रवृत्तिधर्मात्परं निवृत्तिधर्ममेव केवलं मोक्षार्थमाश्रयेतेति चतुर्थमाश्रमं लक्षयति—

## असङ्गशस्त्रेण संसारमूलच्छेदनार्थमहन्तामम(?+ता)समुन्मूलनं पारिव्राज्यम् ॥२७॥

असङ्गेति । श्रोत्रादीन्द्रियाणां शब्दादिविषयसन्निकर्षे हि बहिरेव सुखं तत्कथमुपलभ्येतेति सम्भावनया प्रतिक्षणं सुखं मृगयन् क्षणं क्षणं निर्विषयदशायामेवानन्दमुपलभमानो भ्रान्त्या तत्तद्विषये पुनः पुनरासज्जमान आत्मा मुह्यन् संसरतीत्यसङ्गशस्त्रेण शस्त्रेणेव मोहच्छेदनक्रियाकरणेनासङ्गेन सङ्गविरोधिनाऽऽचरणेन संसारमूलस्य मोहस्य च्छेदनार्थं तावदहन्ताममतासमुन्मूलनं सुखदुःखयोर्यथावत्परिचयायाहन्ताममतयोर्विषयवियोगनिरन्तरदृढाभ्यासेन निःशेषीकरणं पारिव्राज्यं प्रात्यहिकं कायिकपरिश्रमणमाश्रमः ॥२७॥

दाम्भिकैरनुभावितं विचित्रवेषस्याश्रमत्वं वारयति—

न तु श्मश्रुसितरक्तवस्त्रादिधारणया विचित्रवेषः॥२८॥

न त्विति। वेदाद्यध्ययनपूर्वकमुपस्थसंयमं विना केवलं श्मश्र्वादि-बाह्यचिह्नधारणया तु ब्रह्मचर्यं न भवति। उपस्थसंयमश्चानुमानेनैव बोद्धुं शक्यः। न तं किल कायिको विचित्रवेषोऽनुमापयितुं शक्नोति। शतशो व्यभिचारदर्शनात्। किन्तु सत्सङ्गसच्छास्त्रसदाचारानुरूपं वर्तनम्। सन्तश्च सत्यपक्षीया भवन्ति। असन्तस्तु मोहपक्षीयाः। एवमन्तरीयोत्तरीयकञ्चुकोष्णीषादिसितवस्त्रपरिधानविशेषैर्विचित्रवेषो न गार्हस्थ्यम्। नापि रक्तसूक्ष्मक्षौमकार्पाससुन्दरवस्त्रचमत्कृतरचनया दण्डमुण्डनाभ्यां चोपलक्षितो विचित्रवेषो मस्करित्वम् ॥२८॥

एवं बाह्यवञ्चनां तिरस्कृत्यान्तर्वञ्चनातिरस्कारमुपक्रमते—

अथात्ममनसोर्जीवसंज्ञाऽथवाऽन्यतरस्य ॥ २९ ॥

अथेति। सच्चिदानन्दलक्षणस्य प्रतिक्षणं स्फुरत इन्द्रियैर्विषयमनुभवतः सर्वसाक्षिण आत्मनो जलनिधेरिव तरङ्गय(१ or व)तः सतरङ्गस्य जलनिधेरिवोभयस्याथवा जलनिधेरिवात्मन उत तरङ्गस्येव स्फुरणस्य जीवसञ्ज्ञा ॥ २९ ॥

सुखदुःखेच्छाद्वेषप्रभृतिभिर्मनस एव विशेषितत्वेनोभयस्य जीवसञ्ज्ञा वक्तुमशक्येति द्वितीयविकल्पमुत्थापयति—

परस्मिन्नाद्यस्य वा द्वितीयस्य ॥ ३० ॥

परस्मिन्निति । आद्यस्य सकलकारणस्य जन्मादिविक्रियारहितस्यैकरसस्य निस्तरङ्गरत्नाकरस्येव प्रशान्तस्यात्मनोऽथवा प्रतिक्षणं विक्रियमाणस्य तरङ्गस्येव मनसो जीव इत्यभिधानम् ॥३०॥

तत्र प्रथमं विकल्पविषयमसम्भवयति—

आद्ये जायते संसारदोषैराक्रम्यते कथमात्मेति
कस्य चिदसम्भावना ॥ ३१ ॥

आद्य इति। यश्च पूर्ववासनया जायते संसारदोषैरविच्छिन्न जन्ममरणपरम्परासाधनरागद्वेषादिभिश्च पुनराक्रम्यते स जीव इति जीवत्वस्यात्मनि कस्यचिद्विष्णुमित्राद्यन्यतमस्यासम्भावना । योग्यताविरहेणान्यत्रानुलब्ध्या च संशयः ॥ ३१ ॥

मनसोऽपि जीवत्वमसमञ्जसयति—

द्वितीयेऽपि कस्यचिदनात्मनो दुःखनिवृत्तये
कथमुपशान्ता महान्तो महान्तमायासं
कुर्य्युः ॥ ३२ ॥

द्वितीयेऽपीति । आत्ममनसोर्भेदेऽनात्मनो मनसो दुःखनिवृत्तये कथमुपशान्ता दीर्घायासपराङ्मुखा महान्तो विज्ञानविवेकशालिनः पण्डितवर्या महान्तं निरन्तरदृढाभ्यासवैराग्याभ्यां विषयपारतन्त्र्य-

निराकरणरूपं यमनियमाद्यात्मकमायासं कुर्युरिति कस्यचिदसम्भावना ॥ ३२ ॥

बहिर्मुखविचारमुपहसति—

कोऽहमित्यविचारयन्तः केचिदात्मजीवमनांसि विचारयन्ति ॥ ३३ ॥

कोऽहमिति । अहमित्याकारकप्रतीतिविषयः क इत्यविचारयन्तश्चक्रविरहेऽपि यथावद् घटमुत्पिपादयिषन्त इव केचिद्विशिष्टेऽन्यतरस्मिंश्च जीवत्वमसम्भावयन्तस्ताभ्यां भेदेन द्वे इव त्रीण्यात्मजीवमनांसि विचारयन्त्यसाधारणधर्मपुरस्कारेण बुद्ध्या जिघृक्षन्ति ॥ ३३ ॥

बहिर्मुखालापमुहसति—

केचिदात्मा शुद्धो जीवः संसारी मनो बन्धनमहमहङ्कार इत्यालपन्ति ॥ ३४ ॥

केचिदिति । विचारायामु(?=रणामु)पेक्षमाणा आत्मा शुद्धो निर्विशेष ईदृश इत्याकारकप्रतीतेरविषयः, जीवः संसारी अविच्छिन्नजन्ममरणपरम्परावान्, मनो बन्धनं मन एवोक्तपरम्परया जीवं बध्नाति, अहमहङ्कारोऽभिमान इत्यालपन्ति । बोधविरहेऽपि यथाश्रुतमुच्चारयन्ति ॥ ३४ ॥

नैयायिकम्मन्यानुपहसति—

**अहन्ताश्रयो बुद्ध्यादिगुणवानात्मा तस्य सुखादि-साक्षात्कारे करणं मन इत्यालपन्ति ॥ ३५ ॥**

अहन्तेति । अहन्ताया अहमित्याकारकप्रतीतिविषयताया आ-श्रयोऽवलम्बः, बुद्ध्यादिगुणवान् बुद्ध्यादिचतुर्दशगुणानां समवा-यी । आश्रावयन्ति । न तु विविच्य यथावदात्मानं तत्र चतुर्दशगुणान् करणत्वेन मनश्च परिचिन्वन्ति, नापि तत्परिचयफलं स्वस्मिन्मृगयन्ति । केवलं तर्कैरेव कृतकृत्या भवन्ति ॥ ३५ ॥

स्वमतायितपरमताभिनिवेशबहिर्मुखताविलासमुपसंहरति—

**एवं परेषां बहुविधपरस्परविरुद्धानुभवसंस्कारसङ्क्रा-न्ताः स्वानुभवमपह्नुवाना विजयैषिणः पण्डित-म्मन्या इतस्ततश्चोत्कुर्वन्ति ॥ ३६ ॥**

एवमिति । परेषां व्यासकपिलबुद्धजैमिनिप्रभृतीनां परस्परविरु-द्धानुभवसंस्कारसङ्क्रान्ताः । व्यासवचनान्यधिगत्य वेदान्तिनः कपि-लवचनानि, सांख्या बुद्धवचनानि, बौद्धा जैमिनिवचनानि, मीमांसका गौतमवचनानि, नैयायि(?=का) भवन्तो दुराग्रहमुपासीनाः स्वाभिनि-विष्टमेव मतं निरूपयन्तः पराभिनिविष्टानि मतानि विदूषयन्त आर्य-म्लेच्छवत् परस्परविरुद्धसंस्कारसङ्क्रान्तहृदयाः । स्वानुभवमपह्नुवाना-स्तद्वचनान्यधिगत्य पाण्डित्यं समर्थयन्तस्तदनुभवमेव स्वानुभवं मन्य-

मानास्म(?=स्त)दनुभवविकला विजयैषिणोऽध्यापन[?=ऽध्ययन]फलत्वेन वाग्विजयमेवेच्छन्तः पण्डितम्मन्या येन क्रीतास्तदीयास्तत्पाशबद्धाः पशव इव तत्परतन्त्रास्तदीयत्वं निरूपयन्तो यतस्ततः कोलाहलं कुर्वन्ति ॥ ३६ ॥

विज्ञानाभासाभिमुखतानिवृत्त्यर्थं विज्ञानाभिमुखतां निरूपयति—

यश्च सर्वेभ्यः सर्वाणि विज्ञानानि सम्पाद्य मेधयाऽनुसन्धाय प्रतिभया विविच्याचार्यवर्यैरनुमतं सारं स्वबुद्ध्याऽवलम्बते स जीवन्मुक्तो विमुच्यते ॥ ३७ ॥

यश्चेति । यावन्तो ह्यविद्यायाः परं पारं निनीषवो विद्वांस उपलभ्येरंस्तेभ्यः सर्वेभ्यस्तदीयानि सर्वाण्यात्मविषयकाणि विज्ञानानि सम्पाद्य यथावदधिगत्याधिगतानि तानि पुनर्मेधयाऽनुसन्धाय यथावत्स्मृतिजननपर्याप्ताभ्याससंस्कारं विधाय प्रतिभया देहान्तारानुभूतोद्बुद्धसंस्कारसहकृतकल्पनया विविच्य यथावदवगाहनेन सम्परीक्ष्य सम्परीक्षितेषु च यदाचार्यवर्यैरधिगताचार्येषु यावदाचार्य्यगुणसम्पन्नैरनुमतं सारं निरर्थकभागरहितं पूर्णोपकारकं विज्ञानं तद् यः स्वबुद्ध्याऽवलम्बते, न तु वाचैव, स जीवन्मुक्तो जीवन्नेव निर्मुक्तबन्धनो भविष्यच्छरीरेणापि विशेषतो निरन्तरायं मुच्यते ॥ ३७ ॥

स्वानुभवस्यैव मुक्तिहेतुत्वं दर्शयति—

**ये परानुभवैः स्वानुभवं तिरस्कुर्वन्ति ते न कदापि मुच्यन्ते ॥ ३८ ॥**

य इति । परेषां महत्त्वेन पूज्यतमैस्तत्समवेतानुभवैः स्वस्याल्पी-(१+य)स्त्वेनानुभवं ये तिरस्कुर्वन्ति । आचार्यसमवेतैरेव मुक्तिसाधनत्वेन प्रसिद्धतमैरनुभवैरविद्यां विलीय मुक्तो भविष्यामि, किमनेन स्वसमवेतानुभवेनेत्येवमुपेक्षन्ते । बहिर्मुखतयैव प्रतिक्षणमभ्यस्यन्ति । केवलं तर्कान्समाराधयन्ति । तेषामनुकम्पया सहजशत्रुभिः प्रतिपदं पराजिता अपि सर्वतो गिरा विजयन्ते । ते पण्डितम्मन्या इच्छापरिणामविशेषैर्मोहकोपादिभिर्निबध्यमाना बहिर्मुखाः कदापि वेदशास्त्राण्यधीत्यापि न मुच्यन्ते यथावदर्थानधिगत्या पुनरविद्यायामेव लीयन्ते ॥ ३८ ॥

वञ्चकनिरासायाचार्यं लक्षयति—

**त एवाचार्याः स्वानुभवेन ये शिष्याननुभावयन्ति स्वोपशान्त्योपशान्तांश्च कुर्वन्ति ॥ ३९ ॥**

त एवेति । ये साङ्गोपाङ्गोपनिषद्रहस्यवेदार्थपारदृश्वानो निर्मलान्तःकरणाः स्वानुभवेन यद्वस्तु यादृशं तस्य तादृशेन विज्ञानेन शिष्यान् अनन्यथाभूतान् रागादिपारतन्त्र्यरहितान् विज्ञानमात्रोपासकानन्तेवासिनोऽनुभावयन्ति उपदेशमहिम्ना यथावत्परिचा-

यथन्ति स्वानुभवमेव प्रतिबिम्बयन्तो बिम्बयन्ति तथा स्वोपशान्त्या विषयाभिमुखताविरहितस्थित्योपशान्तांश्च कुर्वन्ति त एवाचार्या भवन्ति ॥ ३९ ॥

वञ्चनाभयादाचार्याभासं लक्षयति—

## त एवाचार्याभिधेया वञ्चका ये शिष्याधिकारं दुराचारेण विप्लावयन्ते ॥ ४० ॥

त एवेति । ये विषयोपासका निरङ्कुशेन्द्रियवृत्तयो व्यामोहान्धकूपे विशुद्धहृदयान्पातयन्तो देहाभिमानं पूरयन्तः पण्डितम्मन्याः शिष्याधिकारं शिष्याणां तत्तदर्थसम्पादनयोग्यतां वेदादिसच्छास्त्रानुरूपां स्थितिं दुराचारेण यावद्विपश्चिदनुभवानुरूपाचारविरोधिनाऽऽचारेण तत्तत्पण्डितम्मन्योपदेशानुरूपतदन्यविरूपस्वकीयानुरागपरकीयविद्वेषसम्पादकाचारेण विप्लावयन्ते रसातलं प्रापयन्ते समूलं कषन्ति त एवाचार्याभिधेया आचार्येणाभिधातुमर्हा आचार्यवदाचरणेनाचार्यशब्देनाभिधातुं योग्या भवन्ति वञ्चका नान्ये ॥४०॥

यावदधिकारसंरक्षणानुरूपमुपदिशति—

## यमनियमाविरुद्धानि हि श्रेयस्कराणि कर्माणि॥४१॥

यमनियमेति । अहिंसादिभिर्यमैः शौचादिभिर्नियमैर्यानि हि कर्माणि न व्यरोधिषत तान्येव विवेकानुरूपाणि कायिकवाचिकमा-

नसिककर्माणि श्रेयस्काराणि आत्मनः क्षेमङ्कराणि भवन्ति । न तु तत्तत्समाजसंरक्षकाणि रागद्वेषोपासनानुरूपाणि ॥ ४१ ॥

सत्संप्रदायानुगतं महर्षिनामतोऽपि भयं वञ्चकानां परमशरणमिति निवर्तयति—

महता नाम्नैव न मतिश्छेदनीया ॥ ४२ ॥

महतेति । महर्षीणां योगसिद्धया दुष्प्रधर्षः प्रभावो हि यथा शरीरतः परेषां भयं जनयन्निह चिदुपतिष्ठत एवं नामतोऽपीति न तयोर्भयहेतुता प्रमिता । किन्तु योगसिद्धिप्रभावस्यैव । तथा च योगप्रभावसम्बन्धिशरीरनाम्नोरेव भयहेतुता कल्पनीया, नतु पामरसाधारणेष्वपि तत्तन्महर्षिनामसु । महता नाम्नैव नाम्न एव महत्त्वेन मतिः स्वानुभवो न च्छेदनीया किन्त्वभिधेयस्यापि । विपर्ययात्मकोऽयं ममानुभवो यतो महतानुभवेन विरुध्यत इत्येवं प्रमात्वच्छेदनेन मतिश्छिद्यते ॥ ४२ ॥

इदानीन्तनानां प्रत्यक्षतोऽप्युपलम्भेऽपि प्राक्तना महान्तो नाम्नैवोपलभ्यन्ते तेषामनुभवश्च तन्नाम्नैव निश्चीयते । तथा च तन्नामप्रतिष्ठोपेक्षायां तद्वाङ्मयग्रन्थानामुपेक्षापत्त्या संसारसागरे तरङ्गैरधश्चोर्ध्वं नीयमानानां प्रतिपदं मृतिमभिमुखयतां जीवानां जीवनदायिनी पुरोगता नौरिव शिष्यप्रशिष्यपरम्परयोपलभ्यमानोऽपि महतामुपदेश उपेक्षया जर्जरितस्तटप्रापणे न क्षमेतेति महती वि-

नष्टिरित्यत आह—

महन्नामकर्तृकाणि बहूनि धूर्त्तानां पुस्तकान्युपलभ्यन्ते ॥ ४३ ॥

महन्नामेति । अप्रमात्मकेनानुभवेन प्रमात्मकस्वानुभवतिरस्कारेऽपि वेदादिसच्छास्त्राणां वैयर्थ्यं स्याद्यतस्तान्यपि प्रमात्मकानुभवजननेनैव फलवन्ति भवन्ति । धूर्तैः सङ्करितानां सद्ग्रन्थानां पृथक्त्वेन च महन्नामकर्तृकत्वेन निर्मितानां स्वमनोरथैकतन्त्राणामसद्विषयतो निवृत्तौ सदसन्निर्णयस्तावदावश्यकः । यावता वाक्येनैव विज्ञानमुपास्यते तावान् ग्रन्थः सन्नित्युच्यते । यावता दोषा उपास्यन्ते तावानसन्निति । इदमित्थं तथैव सर्वेऽनुभवन्त्विति परमकरुणया परोपकारैकतन्त्राणां महर्षीणां वाक्यानि सद्ग्रन्थाः । दोषैकतन्त्राणां विषयिणां स्वार्थसाधनविधयान्यथानुभवजनकान्यसद्ग्रन्थाः । इत्येवं सदसत्परिचयः कार्यः । तथा च सम्प्रति महन्नामप्रतिष्ठोपेक्षायां न कापि हानिः । महत्प्रतिष्ठोपेक्षापेक्षया (१) लघीयस्त्वात्, महत्परि(१+च)यविधौ महन्नामापेक्षया तदुक्तेर्गरीयस्त्वाच्च ॥ ४३ ॥

यः(१) पण्डितैः श्राविताभ्याचार्याणां तत्कृतग्रन्थानां च नामानि चिराद्बहूनुपकुर्वन्ति । नाम्नैव तावत्तेषु विश्वासमुपगच्छन्तः प्रवर्त्तन्ते । प्रवर्त्तमाना हि तत्रत्यविषयानुपलभन्ते । उपलब्धविषयैरा-

त्मानमुपकुर्वन्ति । इत्येवं चिराद्बहुभिः पुरुषैः पितृपितामहा(१+दि)भिः समर्जितं स्वयमुपगतं धननिचयमुपेक्षया विनाशयन्तो नूतनयैव धनसम्पत्त्या सुखमुपभुञ्जीयेति के खलु धनान्यर्जयन्ति । उद्देशलक्षणपरीक्षणैः सर्वेषां यथावदालोचनायाः पूर्णायुषापि दुष्करत्वेन वन्ध्यापुत्रवदालोचनाफलस्य वाङ्मयत्वेन तादृशग्रन्थावाग्रहे सर्वस्वनाशः प्रसज्येतेत्यत आह—

## पण्डितम्मन्यभाषया सत्यं चिरात्तिरस्क्रियते ॥४४॥

पण्डितम्मन्येति । अपण्डितैः पण्डितपण्डितम्मन्ययोर्यथावत्परिचयस्य दुष्करत्वेन, सादृश्यदोषादभेदाध्यवसायावश्यम्भावेन, सत्यैकव्रतानां पण्डितानां वैरल्येन, दम्भैकव्रतानां पण्डितम्मन्यानां प्राचुर्येण, नामप्रतिष्ठाप्रयुक्ता यावन्तोऽपकाराः सम्भाव्यन्ते न तावन्त उपकाराः । यत्नैः सममन्तर्हितस्यादृष्टस्य घुणस्यापि पेषणावश्यम्भाव इवोपकारस्याप्यपकारदशावश्यम्भावात् ।

अथ सम्प्रति फलाभावेऽपि यथापूर्वमुत्तरस्मिन्समये फलावश्यम्भावसम्भावनया त्रिकालदृशा महर्षिनामप्रतिष्ठाप्रयुक्तोपकारापेक्षया तदपकारस्यैवाल्पकालिकत्वेन लघीयस्त्वादवश्यं तन्नामप्रतिष्ठा यथापराक्रमं पालनीयेति यदुच्यते तत्साधु मन्यामहे । परमियं व्यवस्था जागरयितव्या । महर्षिवाक्यानि यथा महर्षीन्परिचाययन्ति, न तथा निर्विकल्पकं तन्नामानि । महर्षिवाक्यानि यावदुपकुर्वन्ति, न तावत्तन्नामानि । महर्षिवाक्यैरेवाविद्या विहन्यते, न तु

तन्नामभिः । यथापूर्वमुपनिषदितिहासानुरूपमिदानीं श्रवणं तु न विधेयम्, किन्तु लक्षणप्रमाणाभ्यां सहकृतमेव । श्रवणोत्तरं लक्षणं प्रमाणं च यथावत्परीक्ष्य परीक्षितलक्षणप्रमाणाभ्यां श्रुतस्य मननं कर्त्तव्यम् । न केवलश्रद्धयाऽऽप्तत्वं ग्रहीतव्यम् । न केवलबहिर्बुद्धयाऽऽचार्यस्यान्तःशान्तिरवगन्तव्येत्येवमादिः ।

पण्डितम्मन्यभाषया सत्यं चिराच्तिरस्क्रियते । अनेनेदं कृतमिति निर्धारणस्य पण्डितैरप्यशक्यतया नामप्रतिष्ठासत्त्वेऽपि महर्षिनामानि महर्षिकृतिं परिचाययितुं न शक्नुवन्ति ॥ ४४ ॥

बाह्यशुद्धावन्तःशुद्धिव्यभिचारं निरूपयति—

## विरला हि यादृशमन्तराचरन्ति तादृशं बहिः प्रदर्शयन्ति ॥ ४५ ॥

विरला इति । साधुताप्रसिद्धये लोकपूजार्थं बहवः साधुसदृशं बहिराचरन्ति । कायेन शान्तिं वाचा मौनं वस्त्रधवलिम्ना शौचं जटाश्मश्रुनखमालाविभूतितिलकैः प्रभावं शालग्रामादिपुरतो गानवाद्यनर्त्तनादिभिर्जगन्मोहनमुपासनां कुर्वन्ति । केचिदेवान्तरिन्द्रियसंयमेन सन्तुष्टबुद्धया शान्तिं सदसद्विवेचनतत्परतया मौनं निष्कपटबुद्धया मृज्जलाभ्यां शौचं वागुपस्थादिबहिरिन्द्रियसंयमेन सत्सङ्गत्या प्रभावं वेदादिसच्छास्त्रोच्चारणतदर्थावधारणतदनुरूपाचरणैरीश्वरप्रसादनमुपासनां कुर्वन्ति ॥ ४५ ॥

श्रद्धाजडतयाऽभ्युपगतं पारतन्त्र्यं निषेधति—

## पूर्वेण(?=पूर्णेन)विज्ञानेन परीक्ष्य समाराधनीयाः ॥४६॥

पूर्णे(?+ने)ति। यथावद्गुणदोषावगाहिनाऽविद्ययाऽखण्डितेन विज्ञानेन परीक्ष्य हर्षशोकभयकामकोपादिभिर्महति सम्भ्रमे प्रच्छन्नगुणदोषानालोच्य विद्यासम्पत्तिसम्पन्ना अविद्यादोषरहिता आचार्यवर्याः समाराधनीयाः। कायेन वाचा मानसेन चानुकूलवर्त्तनेन यथावत् प्रसादनीयाः। एवमविद्यासम्पत्तिसम्पन्ना अत्यन्तवहिर्मुखा विज्ञानभारवाहिनः सर्वथोपेक्षणीयाः।

"अग्निमीडे पुरोहितम्" इत्याद्यृचा, "इषे त्वोर्जे त्वा" आदियजुषा, "अग्न आयाहि वीतये" आदिना साम्ना चाग्नेः प्रथममुपासना निरूपिता। तथा "अहरहः स्वाहा कुर्यात्", "यावज्जीवमग्निहोत्रं जुहुयात्" इत्यादिभिर्यावज्जीवनं प्रात्यहिक्याहुतिर्निरूपिता। इत्ये(?+वं) "भूतानि समीक्षन्ताम्। मित्रस्याहं चक्षुषा सर्वाणि भूतानि समीक्षे। मित्रस्य चक्षुषा समीक्षामहे" इति यजुषा। इत्येवमन्तर्वर्त्तनम्। तथा च वेदानुरूपस्थित्या वहिरग्निहोत्रादिनाऽन्तः सर्वभूतसुहृद्भावादिना परीक्ष्यैव वेदानुरूपस्थितिमन्त आचार्यवर्याः समाराधनीयाः। न कदापि तथेतरे ॥ ४६ ॥

## विज्ञानविरह ईश्वर एव शरणम् ॥ ४७ ॥

विज्ञानेति । विवेकवैराग्यादिसत्त्वसम्पत्त्या विशिष्टस्य वेदादिस-च्छास्त्रबोधस्य विरहे सम्पादनयोग्यतात्यन्ताभावे ईश्वरः । यो योग-सम्पत्त्या विद्यापारदृश्वा, स्वेच्छानुरूपं सर्वान् नियन्तुं शक्नोति, सर्वं जानाति, कर्त्तुं च(?=चे)ष्टे, यं प्रसाद्य यतः सर्वमाप्नुवन्ति मनो-रथम्, यं च मनसाऽप्यन्यथा कर्त्तुं कोऽपि नेष्टे, स एव योगा(?+ना)मी-श्वरो महेश्वरो जगतां शङ्करो योगविज्ञानसागर आश्रमचतुष्टयस-म्पन्नो भूतपतिरेव शरणं रक्षिता, नान्यः । इति सर्वामाशां निरस्येश्व-रोपासनैव कल्याणं कुर्यादिति तामेव यथापराक्रममाश्रयेत् ॥४७॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यवर्यशाकद्वीपीयद्विजोत्तमश्रीमत्प-ण्डितानन्तराममिश्रान्तेवासिना शाकद्वीपीयद्विजन्मना वि-रचितं कनिष्ठाधिकारोपेन्द्रविज्ञानदर्शनभाष्यम् ॥



अथोत्तममध्यमकनिष्ठाधिकारिणां साधारणोपदेशान् सूत्रयति । तत्र तेषां जिज्ञासाविषयत्वेन प्रथमोपस्थितमात्मलक्षणं निरूपयति—

## आत्मनः स्फुरणं चैतन्यम् ॥ १ ॥

आत्मन इति । चेतति सम्यग् जानाति, प्रतिबिम्बधारणविधया स्वस्मिन्नाकारमुल्लिखति, आकारग्रहणेनात्मानं संस्करोति, बाह्याना-

माभ्यन्तरत्वं साधयति, विषयविषयिभावं जनयति, विषयात्मना च प्रकाशते, तत्तदाकारबोधमाविर्भावयति, ज्ञातृज्ञानज्ञेयानां युगपदाकारमभिव्यञ्जयतीति चेतनः । तस्य कर्म चैतन्यमात्मनोऽसाधारणधर्म इतरेषां साधारणो विधर्म इत्यात्मनो लक्षणम् । उक्तं चेतनकर्म लक्षयन्नन्तःकरणत्वेन प्रसिद्धिविषयीकृतं स्फुरणं चैतन्यत्वेन निरूपयति । आत्मनः स्फुरणमिति । विषयाभिमुखीभवनं विषयसम्बन्धसंस्कारग्रहणं च । अनेन चैतन्यस्यात्मधर्मत्वं निरूपितम् ॥ १ ॥

आत्मन एकत्वं निरूपयन्ननेकत्वं निरूपयति—

तद्दीपशिखेवाबाधितधारं प्रतिशरीरमेकम् ॥ २ ॥

तदिति । दीपशिखेव प्रदीपकलिकासदृशं निर्विषयत्वेनानुपलम्भादबाधितधारं निष्प्रतिबन्धप्रवाहं प्रतिशरीरमेकं सर्वेषु शरीरेष्वेकत्वेनोपलम्भाच्छरीरसमव्या(?+प्ति)कं तत् समुद्रस्य तरङ्ग इव सर्वशरीराणामधिष्ठातुरेकस्यात्मनः प्रतिशरीरमेकं चैतन्यम् ॥ २ ॥

चैतन्यधाराप्रत्यायकं सन्धि लक्षयति—

तस्य निर्विषयावस्थाक्षणः सन्धिः ॥३॥

तस्येति । चैतन्यस्य निर्विषयावस्थाक्षणः । अनुभूतविषयस्मृतय आत्मसंलग्नानुभवजन्यसंस्कारमात्मसम्बन्धेनोद्बोधयितुं(?) । प्रकृतविषयाभिमुखतया तत्सामान्यविषयकतया च विशेषावगाहेन प्रयतनं नि-

विषयावस्थानम् , आहोस्वित्प्रकृतविषयग्रहोत्तरं मध्ये तरङ्गस्य समुद्रात्मनेवात्मरूपेणावस्थानम् , पराङ्मुखतानिवृत्त्याऽस्वाङ्मुखत्वेनानन्दावगाहि सदोषत्वेन सन्मात्रावगाहि वाऽवस्थानम् । तदुपलक्षितः क्षणोऽल्पीयान् समयो वृत्तीनां सन्धिरुच्यते ॥ ३ ॥

वृत्तेरभावं लक्षयति—

## अज्ञानविषयावस्थोपलक्षितः समयोऽभावः ॥४॥

अज्ञानेति । तेजोऽभावान्धकारवन्न ज्ञानाभावोऽज्ञानम् , आवरणविक्षेपशक्त्योरुपलम्भात् । सत्स्वरूपानवभासनमावरणम् । असत्स्वरूपावभासनं विक्षेपः । यथासद्रूपावभासने रागादिना विक्षेपः सहकारिकारणम् । अज्ञानमेव परिणतं वस्तुजातमसदुच्यते ।

सदसतोर्विरोधवन्न ज्ञानाज्ञानयोः परस्परविरोधः, परस्परं विषयविषयिभावोपलब्धेः । विस्मृतिदशायां ज्ञानविषयकत्वमज्ञानस्य । विषयेण स्वविषयकं ज्ञानमुत्पद्यते । ज्ञानाभ्यासो हि स्वसंस्कारं जनयति । उद्बुद्धो हि संस्कारः स्वजनकं ज्ञानमुत्थापयति । उत्थापिते ज्ञाने विषयतया तद्वस्तु भासते । तज्ज्ञानं स्मृतिरुच्यते । तत्र संस्कारेण हि तज्ज्ञानं तज्ज्ञानीयविषयतया तद्वस्तु चोपस्थाप्यते । तथा चोद्बोधकेनाभिमुखीकृत आत्मनि संस्कारमहिम्ना सर्वाणि तानि ज्ञानविषयीक्रियन्ते । एवं संस्कारविलये तथाभूत आत्मनि सर्वाणि तान्यज्ञानविषयीभवन्ति ।

सामानाधिकरण्येन तादात्म्यापन्नयोर्ज्ञानाज्ञानयोरुद्भूतेश्च, यथा ज्ञानभेदाः प्रत्यक्षानुमित्यादयोऽज्ञानमाक्रम्योपतिष्ठन्ते, एवमज्ञानभेदाः संशयविपर्ययादयो भवन्ति । अज्ञानविषयत्वेनैव प्रियाप्रियाणि सर्वाणि सुषुप्तिमूर्च्छयोर्नात्मनः प्रतिभासन्ते, तदानीमज्ञानमात्रस्य ज्ञानविषयत्वात् । आत्मनः संस्कारमलिनः(?=नं)स्फुरणमेवाज्ञानमिति तत्तस्य धर्मतां प्राप्नोति । चैतन्यविषयप्रियाप्रियाण्येवात्मानं स्पृशन्ति । ज्ञानस्य चैतन्यत्वेऽपि नाज्ञानस्य तन्निरूपयितुं शक्यते, चैतन्य(?+।)चैतन्योभयात्मकत्वात् ।

संस्कारपरिणामा हीच्छादयः संसारमुत्पादयन्ति । संस्कारविरहे ससंसारमस्तमुपयान्ति च । संसरणं जन्ममरणपरम्परयाऽऽक्रमणं संसारस्तस्य हेतुः संस्कारः । स एवाज्ञानम् । तन्मयानि हि सर्वाण्यात्मन्युपलभ्यन्ते । यच्च प्रतिशरीरमबाधितधारं चैतन्यं तद्गतसंस्कारविरहे तत्संसारो निवर्त्तते । आत्मसंस्कारविलये हि सन्मात्रमवशिष्यते । आत्मसंस्कारविलयो हि कार्यपराङ्मुखतयाऽऽत्मनि प्रकृतेरन्तर्धानम् ।

तदायासो हीश्वराधीनः । यदा खलु जीवानां संसारदुःखं परमकारुणिकस्य योगाधीश्वरस्य परमेश्वरस्य वृषध्वजस्य दयापारतन्त्र्यं निरूपयति तदा क्षणेन हि परमेश्वरः सर्वमुपसंहृत्य सदात्मना समवशिष्यते । आत्मभूतश्चिरं शेते । उपसंहारसमये यादृशी वासना तदनुरूपोत्पत्तिसमये प्रकृतिरुद्बुध्यते । परमेश्वरोऽपि तयैव वासनयोद्बुद्धो योगमहिम्ना सर्वं वशीकृत्य यथापूर्वमी-

हते । सवासनमात्मनि विलीनानि खलु चैतन्यानि वासनया शरीराणि निर्माय जीवभूतानि यथापूर्वमुपभुञ्जत इत्यलम् ।

अज्ञानं विषयो यस्याश्चैतन्यावस्थायास्तदुपलक्षितः समयो वृत्तीनामभाव उच्यते ॥ ४ ॥

कैवल्यावस्थां लक्षयति—

## निखिलविषयपराङ्मुखावस्थोपलक्षितः समयः स्वरूपस्थितिः ॥ ५ ॥

निखिलेति । यदा खलु चैतन्यमन्तर्मुखीभूयात्मानमेवावगाहते तदा न केऽपि विषया आत्मानमभिमुखयन्ति। तदानीं यादृशवासनापुरःसरमन्तर्मुखीभूतस्य तमावगाहनं तदनुरूपमेव समाधितो व्युत्थानम्। तदानीमानन्दमयचैतन्यधाराया विषयभूतोऽप्यात्मा विषयविषयिभावेन न प्रतिभासते । विषयविषयिणोर्वैजात्यविरहेण समुद्रतरङ्गयोरिवात्यन्ततादात्म्यापत्तेः । तथा च सा निखिलविषयपराङ्मुखावस्थोपपद्यते । तयोपलक्षितः समयः स्वरूपस्थितिः । आत्मरूपेण चैतन्यस्य स्थितिः । सा हि भेदानुपलब्ध्या कैवल्यम् ॥ ५ ॥

चैतन्यस्य देहधर्मतां खण्डयति—

## शरीरे बहुत्र तत्तदवयवावच्छेदेन तत्तद्विषयविषयीकरणात्तदात्मधर्मः ॥ ६ ॥

शरीर इति । यदि शरीरस्य धर्मश्चैतन्यं तर्हि किं सर्वानवयवा-न्व्याप्य वर्त्तेत उताहो एकदेशम्। तत्रापि किं रूपवदविनाभावेन नख-केशवद्विनाभावेनापि वा तिष्ठति । आद्ये, सुषुप्तिमूर्च्छयोरपि चैतन्यं प्रतीयेत। औषधविशेषप्रापणेन गाढं मूर्छितस्यापि तीक्ष्णशस्त्रेण त्व-ङ्मांसास्थिविच्छेदनजन्या महाक्लेशाः कथङ्कारं नानुभूयन्ते। कथङ्कारं यथापूर्वं तदानीं स्वास्थ्यं तस्य संघटेत । द्वितीये, नखकेशवत्पुनः पूर्व-सम्बन्धविरहेण जीवयीत(?) कोऽपि नेशीत । इत्यादिविप्रतिपत्त्या न शरीरधर्मश्चैतन्यम् ।

तत्र चेदवस्थाया धर्म उच्यते, तर्हि कस्येमास्तिस्रो वा चतस्रो वाऽवस्था भवन्ति । यदि देहस्येत्युच्यते, तर्हि स्वाप्निकव्यवसायाः कथं न शरीरं तत्तद्देशादिना योजयन्ति । अङ्ग स्वप्नो विप्रतिप-द्यतां जाग्रत्सुषुप्ती केन बाध्येताम् । यदि धर्मिभेदः स्वीक्रियते, स्वा-प्निकानां जाग्रतः स्मरणं नोपपद्यते । जाग्रत्स्वप्नश्रमार्त्या सुषुप्तो-त्थितस्य पुनरार्तिरुपतिष्ठते । व्याप्तिग्रहाभावे श्रमापनोदनेन सुखार्थं सुषुप्तौ कोऽपि न प्रयतेत। व्याप्तिग्रहश्च धर्मिभेदे नोपपद्यते इत्येवमा-लोचनया तदात्मधर्म इति सूत्रितम् । यद्यदवयवावच्छेदेन सुखदुःखा-न्यतरवेदना तत्तदवयवा अपि वेदनाविषया इति वेदनाविषयत्वेन श-रीरस्य धर्मो न चैतन्यम्, किं तु यदाश्रितमुपलभ्यते तस्येति चैतन्याश्रयत्वेन शरीरातिरिक्त आत्मा निर्विषयत्वेन भासते, नापि चैतन्यम् ॥ ६ ॥

संस्कारपरिणामविशेषान् दर्शयति—

तदेव कामक्रोधलोभदम्भमदमात्सर्याशास्पृहा-चिन्तातृष्णाद्यनेकावस्थाभिराक्रम्यते भूतसूक्ष्मतैजसावयवतादात्म्यात् ॥ ७ ॥

तदेवेति । चैतन्यमेव। उपस्थादिक्षोभजनको नरयोषिदन्यतराभिलाषः कामः, आन्तरबाह्यक्षोभपूर्वको हिंसाभिलाषः क्रोधः, अन्तरुद्भूतो विषयाभिलाषो लोभः, अन्यादृशवेषप्रदर्शनेन पूज्यबुभूषा दम्भः, युष्मदपेक्षयाऽहं वरीयानित्यभिव्यञ्जिकेच्छा मदः, परोत्कर्षनिवर्त्तनेच्छा मात्सर्यम्, भवेदित्याकारिकेच्छा त्वाशा, भवत्वित्याकारिकोत्कटेच्छा स्पृहा, अभिलषितविषयावाप्तिप्रतिबन्धशङ्कया तन्निवर्त्तनेच्छा चिन्ता, अन्तरुद्भूय बलाद्बहिर्भूतो मुखं विकुर्वन् विषयाभिलाषस्तृष्णा। आदिना मूर्च्छादयः सङ्ग्राह्यन्ते । ताभिरनेकावस्थाभिराक्रम्यते । अन्यथाप्रतीतिजननेन चैतन्यफलं यथावत्प्रतीतिः प्रबाध्यते । तत्र हेतुर्भूतसूक्ष्मेति । भूतानां शब्दादिमतामाकाशादीनां ये सूक्ष्मास्तैजसाः प्रतिबिम्बग्राहिणोऽवयवास्त आत्मा यस्य तस्य भावस्तत्त्वस्मात् । त एवात्मनः प्रतिबिम्बमाकर्षन्तः परस्परं तादात्म्यापन्नाः, वह्नेः स्फुलिङ्गा इव, यथावदन्यथा च विषयान् प्रत्याययन्ति । यथावद् गृह्णन्नुपरमति, अन्यथा गृह्णन्नात्मा निमज्जति ॥ ७ ॥

चैतन्यस्य जीवभावं निरूपयति—

तथाभूतं तदेव तत्तद्वासनया तत्तद्बीजतादात्म्यापन्नमात्मनो व्यापकत्वेनाव्याहतगतित्वात्सर्वं शरीरं व्याप्नोति ॥ ८ ॥

तथाभूतमिति । तत्तद्वासनया पूर्वपूर्वशरीरसम्पादितवासनया तत्तद्बीजतादात्म्यापन्नं पूर्वपूर्वसजातीयोत्तरोत्तरशरीरकारणभूतशुक्रतादात्म्यापन्नमात्मनो व्यापकत्वेन यावद्वस्त्ववच्छेदेन बिम्बोपलब्ध्या प्रतिबिम्बमहिम्ना यावच्छरीरेऽव्याहतगतित्वात् तथाभूतं तत्तदवस्थापन्नं तदेव चैतन्यमेव सर्वं पूर्वपूर्वं वासनानुरूपं शरीरं व्याप्नोति शुक्रमयमिव चैतन्यमयं करोति ॥ ८ ॥

बन्धे प्रकारं दर्शयित्वा मुक्तिप्रकारं दर्शयति—

तदेवात्माभिमुखमात्माकारं स्वेन साक्षात्क्रियते ॥९॥

तदेवेति । चैतन्यमेवात्माभिमुखमात्माकारमात्मभूतं बिम्बप्रतिबिम्बभावरहितं स्वेन साक्षात् क्रियते । ध्यातृध्यानयोरनुपलब्ध्या स्वमेव पूर्वाभ्यासमहिम्ना देशकालवस्तुपरिच्छेदशून्यं सच्चिदानन्दरूपमिदमित्थमिति निरूपयितुमशक्यं प्रकाशते ॥ ९ ॥

आत्मसाक्षात्कारमभिव्यञ्जयति—

तत्र विज्ञातृत्वेन भूतसूक्ष्मतैजसावयवात्मकं प्रतिबिम्बग्राहि लिङ्गं विषयत्वेनात्मा विषयित्वेन भासमानमपि । तेषां भेदः केनापि कुशाग्रबुद्धिनापि विस्पष्टं नावगाह्यते ॥ १० ॥

तत्रेति । आत्मसाक्षात्कारे विज्ञातुं प्रयतमानो जीवो विजानन्नेवात्मनीन्धनचयाग्नौ स्फुलिङ्ग इव सद्यो निलीयते । निलीयमानोऽपि जीवः स्वस्मिन्विज्ञातृत्वं चैतन्ये विषयित्वमात्मनि विषयत्वं भावयन्न तत्तद्वासनां जहाति । व्युत्थाय समाधावनुभूतं स्मरन् भेदमवगाहते ॥ १० ॥

आत्मनो लक्षणं निरूपयति—

अनुद्वेगकरत्वेन सर्वानर्थमूलाहङ्कारनिवर्त्तकत्वेन च प्रियं स्वेतरसकलप्रतीतिविरहत्वेन सकलाधिष्ठानं शम्भुमुद्रयोपलक्षितं शुद्धचैतन्यम् ॥१०॥

अनुद्वेगेति । स्पृहादिपारतन्त्र्यमुद्वेगस्तन्निवर्त्तकत्वेन, सर्वेषामनर्थानां सुखविरोधिनां मूलमहङ्कारस्तदुपशामकत्वेन च प्रियम् । अहङ्कारो हि महानात्मसाक्षात्कारप्रतिबन्धकः । निरहंकारस्थित्या समं नास्ति तत्साधनम् । यावन्न सन्तुष्यति न तावत्स्वास्थ्यमुपलभते ।

प्रियतमपदार्थावाप्त्या हि पूर्णसन्तोषो भवति । यावत्तमालिङ्गति तावदेव प्रियतमभावनया स आसज्जते । आसक्तो हि तत्रत्यमानन्दं विरतिं वा समुपलभते । आत्मन्यासक्तो विवेकी जगत उपरमन्नात्मानन्दमुपभुङ्क्ते। महामोही जगत्यासक्त आत्मन उपरमन् जगदानन्दमुपभुङ्क्ते । न हि भ्रान्तो भ्रमं शक्नोति विज्ञातुम् । न ह्यात्मसाक्षात्कारमात्रेण जगत उपरन्तुं कोऽपि शक्नोति, विनाऽभ्यासमहिमानम् । निरन्तरसत्कार-पूर्वकात्मसाक्षात्काराभ्यासमहिम्ना जगत्साक्षात्काराभ्याससंस्कारा निवर्त्तन्ते । एतदुभयमहिम्ना खलु जीवन्मुक्तः प्रशान्त उपरतो भवति ।

स्वस्मादितरेषां सकलानां प्रतीतेर्विरहसाक्षित्वेन तस्यात्मत्वमुपप-द्यते । यत्प्रतीत्या सर्वाणि प्रतीयन्ते, सर्वेषामप्रतीतावपि यत्प्रतीयते, तत्स-कलाधिष्ठानं शुद्धचैतन्यं कामादिदोषैर्विरहितं स्वरूपप्रतिष्ठं चैतन्यम् । तच्च शम्भुमुद्रया अन्तर्लक्ष्यम् , बहिर्दृष्टिर्निमेषोन्मेषवर्जिता एषा सा शाम्भवी मुद्रा वेदशास्त्रेषु गोपिता, उपलक्षितं भवति ।। ११ ।।

जीवनमरणपुनर्जननानि निरूपयति—

**तत्तद्विषयवासनाभिरेव तत्तद्विषयसूक्ष्मरसै-रुपजीविततत्तद्विषयसूक्ष्मतैजसावयवतादात्म्यापन्नं तदुपजीव्यते म्रियते पुनर्जायते ।। १२ ।।**

तत्तदिति । पूर्वपूर्वविषयासक्तिजनितसंस्कारविशेषैरेव तत् चैत-न्यमुपजीव्यते म्रियते पुनर्जायते । चैतन्यं विशिनष्टि । उपभुक्तानेकवि-

धविषयाणां सूक्ष्मरसैरुपजीविता ये पाञ्चभौतिकानां तत्तद्विषयसूक्ष्मतैजसावयवास्ते परस्पराध्यासेन स्फुलिङ्गवदात्मा यस्य तत् तदात्म तस्य कर्म तादात्म्यं तदापन्नम्। उक्ततैजसावयवानां प्रतिक्षणं दीपशिखाया इवात्यन्तसदृशपरिणामेन तत्रत्यप्रतिबिम्बस्यापि तथात्वमुपपद्यते ।

प्राणनियमनेन देहतादात्म्यमापद्य वर्त्तनमुपजीवनम् । प्राणनियमनाशक्त्योद्विज्य देहान्निःसरणं मरणम् । देहतादात्म्यमापद्याविर्भवनं पुनर्जननम् ॥ १२ ॥

वासनां लक्षयति—

तत्तद्विषयलाभावधि निवर्त्तयितुमशक्येच्छा वासना ॥ १३ ॥

तत्तद्विषयेति । तत्तदभिलषितविषयावाप्तिपर्यन्तं या निवर्त्तयितुं न शक्यते सा संस्कारात्मना सूक्ष्मभूतेच्छा वासना । सैव मुख्यो बन्धः ॥ १३ ॥

यस्य सर्वेषामभिलषितविषयाणां पूर्णतयावाप्तिस्तस्यैवाशेषतो वासना निवर्त्तत इत्याशां निषेधति—

यावदभिलषितविषयाणां युगपल्लाभोऽप्यनाशास्यः ॥ १४ ॥

यावदभिलषितेति । लाभाल्लोभोऽभिवर्द्धत इति किंवदन्त्या लो-

भाभिवर्द्धनस्य निरवधिकत्वमाख्यायते । वर्तमानानां यावदभिलषितविषयाणां यथाकथञ्चित् प्राप्तिसम्भावनायामपि भविष्यतां तेषां प्राप्तिरसम्भवेति यावदभिलषितविषयलाभोत्तरं वासनानिवृत्तिरिव तेषां लाभोऽपि युगपदनाशास्यः ॥ १४ ॥

जीवन्मुक्तिप्रयोजकं दर्शयति—

वासनाविधुरं तदेव जीवन्मुच्यते न पुनर्जायते न पुनर्जायते ॥ १५ ॥

वासनेति । विवेकमहिम्ना यो निरवशेषतो वासनां निवर्त्त्य स्वरूपप्रतिष्ठो व्यवहरन्नपि सदात्मानमभिमुखयति स जीवस्तदेव वासनाविधुरं चैतन्यं जीवन्मुच्यते । न पुनर्जायते न पुनर्जायते ॥१५॥

आत्मविज्ञानसूत्राणि तद्भाष्यं च स्फुटार्थकम् ।
उपेन्द्रो व्यदधाद्येन सुखिनः स्युर्विवेकिनः ॥ १ ॥

भारं न्यस्य गृहस्य रामवचनब्रह्मण्यसाध्व्यं परै-
र्निश्चिन्तेन मया तदीयकृपया विज्ञानमाराध्यते ।
तत्सन्तुष्टमहेश्वरो हरतु मे योगान्तरायांस्तथा
निश्चिन्तीकरणस्य कर्त्रभिमतं दत्तात्स तस्मै फलम् ॥२॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यवर्यशाकद्वीपीयद्विजोत्तमश्रीमत्पण्डितानन्तराममिश्रान्तेवासिना विरचितं स्वकृतोपेन्द्रविज्ञानदर्शनभाष्यम् ॥

